§ १३०. ननु द्रव्यपर्यायात्मकत्वेऽपि वस्तुनस्तदवस्थमेव दौस्थ्यम्; तथाहि–द्रव्यपर्याययोरैकान्तिकभेदाभेदपरिहारेण कथञ्चिद्भेदाभेदवादः स्याद्वादिभिरुपेयते, न चासौ युक्तो विरोधादिदोषात्–विधिप्रतिषेधरूपयोरेकत्र[1] वस्तुन्यसम्भवान्नीलानीलवत् १। अथ केनचिद्रूपेण भेदः केनचिदभेदः; एवं सति भेदस्यान्यदधिकरणमभेदस्य चान्यदिति वैयधिकरण्यम् २। यं चात्मानं[2] पुरोधाय भेदो यं चाश्रित्याभेदस्तावप्यात्मानौ भिन्नाभिन्नावन्यथैकान्तवादप्रसक्तिस्तथा च सत्यनवस्था ३। येन च रूपेण भेदस्तेन भेदश्चाभेदश्च येन चाभेदस्तेनाप्यभेदश्च भेदश्चेति सङ्करः[3] ४। येन रूपेण भेदस्तेनाभेदो येनाभेदस्तेन भेद इति व्यतिकरः[4] ५। भेदाभेदात्मकत्वे च वस्तुनो विविक्तेनाकारेण निश्चेतुमशक्तेः संशयः ६। ततश्चाप्रतिपत्तिः ७ इति न विषयव्यवस्था ८। नैवम्; प्रतीयमाने वस्तुनि विरोधस्यासम्भवात्। यत्सन्निधाने यो नोपलभ्यते स तस्य[5] विरोधीति निश्चीयते। उपलभ्यमाने च वस्तुनि को विरोधगन्धावकाशः?। नीलानीलयोरपि[6] यद्येकत्रोपलम्भोऽस्ति तदा नास्ति विरोधः। एकत्र चित्रपटीज्ञाने सौगतैर्नीलानीलयोर्विरोधानभ्युपगमात्, यौगैश्चैकस्य[7] चित्रस्य रूपस्याभ्युपगमात्[8], एकस्यैव[9] च पटादेश्चलाचलरक्तारक्तावृतानावृतादिविरुद्धधर्माणामुपलब्धेः प्रकृते को विरोधशङ्कावकाशः?। एतेन वैयधिकरण्यदोषोऽप्यपास्तः; तयोरेकाधिकरणत्वेन प्रागुक्तयुक्तिदिशा प्रतीतेः। यदप्यनवस्थानं दूषणमुपन्यस्तम् तदप्यनेकान्तवादिमतानभिज्ञैनैव, तन्मतं हि द्रव्यपर्यायात्मके वस्तुनि द्रव्यपर्यायावेव भेदः भेदध्वनिना तयोरेवाभिधानात्, द्रव्यरूपेणाभेदः इति द्रव्यमेवाभेदः एकानेकात्मकत्वाद्वस्तुनः। यौ च सङ्करव्यतिकरौ तौ मेचकज्ञाननिदर्शनेन[10] सामान्यविशेषदृष्टान्तेन च परिहृतौ। अथ तत्र तथाप्रतिभासः समाधानम्; परस्यापि तदेवास्तु प्रतिभासस्यापक्षपातित्वात्। निर्णीते चार्थे संशयोऽपि न युक्तः, तस्य सकम्पप्रतिपत्तिरूपत्वादकम्पप्रतिपत्तौ दुर्घटत्वात्। प्रतिपन्ने च वस्तुन्यप्रतिपत्तिरिति साहसम्। उपलब्ध्यभिधानादनुपलम्भोऽपि न सिद्धस्ततो नाभाव इति दृष्टेष्टाविरुद्धं द्रव्यपर्यायात्मकं वस्त्विति ॥३२॥

§ १३१. ननु द्रव्यपर्यायात्मकत्वेऽपि वस्तुनः कथमर्थक्रिया नाम?। सा हि क्रमाक्रमाभ्यां व्याप्ता द्रव्यपर्यायैकान्तवदुभयात्मकादपि व्यावर्तताम्। शक्यं हि वक्तुमुभयात्मा[11] भावो न क्रमेणार्थक्रियां कर्तुं समर्थः, समर्थस्य क्षेपायोगात्। न च सहकार्यपेक्षा युक्ता, द्रव्यस्याविकार्यत्वेन सहकारिकृतोपकारनिरपेक्षत्वात्। पर्यायाणां च क्षणिकत्वेन पूर्वापरकार्यकालाप्रतीक्षणात्[12]। नाप्यक्रमेण, युगपद्धि सर्वकार्याणि कृत्वा पुनरकुर्वतोऽनर्थ-

---

१ भेदाभेदरूपयोः। २ स्वभावम्। ३ युगपदुभयप्राप्तिः सङ्करः। ४ परस्परविषयगमनं व्यतिकरः। ५ छायेवातपस्य। ६ परोक्तदृष्टान्तं दूषयन्नाह। ७ योगः प्रत्याहारादिस्तं वेत्त्यधीते वा यौगः "तद्वेत्त्यधीते" [ हैमश० ६. २. ११७ ] इत्यण्। ८ चित्ररूपस्य एकस्याऽवयविताऽभ्युपगमात्। ९ एकस्यैव पटा० –डे०। १० विज्ञानस्यैकमाकारं नानाकारकरम्बितम्। ११ द्रव्यपर्यायात्मा। १२ प्रथमद्वितीयकाय(र्य)योः कालः।

क्रियाकारित्वादसत्त्वम्, कुर्वतः क्रमपक्षभावी दोषः । द्रव्यपर्यायवादयोश्च यो दोषः स उभयवादेऽपि समानः–

**"प्रत्येकं यो भवेद्दोषो द्वयोर्भावे कथं न सः ?"**

इति वचनादित्याह–

**पूर्वोत्तराकारपरिहारस्वीकारस्थितिलक्षण[1]परिणामेनास्या[2]र्थक्रियोपपत्तिः ॥ ३३ ॥**

§ १३२. 'पूर्वोत्तरयोः' 'आकारयोः' विवर्तयोर्यथासङ्ख्येन यौ 'परिहारस्वीकारौ' ताभ्यां स्थितिः सैव 'लक्षणम्' यस्य स चासौ परिणामश्च, तेन 'अस्य' द्रव्यपर्यायात्मकस्यार्थक्रियोपपद्यते ।

§ १३३. अयमर्थः–न द्रव्यरूपं न पर्यायरूपं नोभय[3]रूपं वस्तु, येन तत्तत्पक्षभावी दोषः स्यात्, किन्तु स्थित्युत्पादव्ययात्मकं शबलं जात्यन्तरमेव वस्तु । तेन तत्तत्सहकारिसन्निधाने क्रमेण युगपद्वा तां तामर्थक्रियां कुर्वतः सहकारिकृतां चोपकारपरम्परामुपजीवतो भिन्नाभिन्नोपकारादि[4]नोदनानुमोदनाप्रमुदितात्मनः उभयपक्षभाविदोषशङ्काकलङ्काऽकान्दिशीक[5]स्य भावस्य न व्यापका[6]नुपलब्धिबलेनार्थक्रियायाः, नापि तद्व्याप्य[7]सत्त्वस्य निवृत्तिरिति सिद्धं द्रव्यपर्यायात्मकं वस्तु प्रमाणस्य विषयः ॥३३॥

§ १३४. फलमाह–

**फलमर्थ[8]प्रकाशः ॥३४॥**

§ १३५. 'प्रमाणस्य' इति वर्तते, प्रमाणस्य 'फलम्' 'अर्थप्रकाशः' अर्थसंवेदनम् ; अर्थार्थी हि सर्वः प्रमातेत्यर्थसंवेदनमेव फलं युक्तम् । नन्वेवं प्रमाणमेव फलत्वेनोक्तं स्यात्, ओमिति चेत्, तर्हि प्रमाणफलयोरभेदः स्यात् । ततः किं स्यात् ? । प्रमाणफलयोरैक्ये सदसत्पक्षभावी दोषः स्यात्, नासतः करणत्वं न सतः फलत्वम् । सत्यम्, अस्त्ययं दोषो जन्मनि न व्यवस्थायाम् । यदाहुः–

**"नासतो हेतुता नापि सतो हेतोः[9,10] फलात्मता ।**
**इति जन्मनि दोषः स्याद् व्यवस्था तु न दोषभाग् ॥"** इति ॥३४॥

§ १३६. व्यवस्थामेव दर्शयति–

**कर्म[11]स्था क्रिया ॥३५॥**

§ १३७. कर्मोन्मुखो ज्ञानव्यापारः फलम् ॥३५॥

१ –०क्षणेन परि० –सं–मू० । २ –०नास्य क्रियो० –सं–मू० । ३ स्वतन्त्रद्रव्यपर्यायरूपम् । ४ आदेरुपकार्युपकारयोः सम्बन्धः । ५ "कान्दिशीको भयद्रुते"–अभि० चि० ३.३० । ६ क्रमाक्रमौ व्यापकौ तयोः । ७ –०प्यस्य सत्त्व०–डे० । ८ अर्थक्रियाक्षमं वस्तु अत्रार्थशब्देनोच्यते । ९ अविद्यमानप्रमाणस्य । १० फलात् प्रमाणस्याभेदो भवन्मते । ततश्च फलस्य साध्यत्वेनासत्त्वात् प्रमाणस्याप्यसत्त्वप्रसङ्गः । असच्च न करणं भवति सिद्धस्यैवाङ्गीकारात् । तथा, प्रमाणात् फलस्य यद्यभेदः तदा प्रमाणस्य सत्त्वात् फलमपि सदेव स्याद्विद्यमानस्य च [न] फलत्वं साध्यस्यैव फलत्वाभ्युपगमात् । ११ पञ्चत्रिंशत्तमं षट्त्रिंशत्तमं च सूत्रद्वयं ता–मू० प्रतौ भेदकचिह्नं विना सहैव लिखितं दृश्यते–सम्पा० ।

§ १३८. प्रमाणं किमित्याह–

**कर्तृस्था प्रमाणम् ॥३६॥**

§ १३९. कर्तृव्यापारमुल्लिखन् बोधः प्रमाणम् ॥३६॥

§ १४०. कथमस्य प्रमाणत्वम् ? । करणं हि तत् साधकतमं च करणमुच्यते।
5 अव्यवहितफलं च[3] तदित्याह–

**तस्यां सत्यामर्थप्रकाशसिद्धेः ॥३७॥**

§ १४१. 'तस्याम्' इति कर्तृस्थायां प्रमाणरूपायां क्रियायां 'सत्याम्' 'अर्थप्रकाशस्य' फलस्य 'सिद्धेः' व्यवस्थापनात् । एकज्ञानगतत्वेन प्रमाणफलयोरभेदो, व्यवस्थाप्यव्यवस्थापकभावात्तु भेद इति भेदाभेदरूपः स्याद्वादमबाधितमनुपतति प्रमाणफलभाव
10 इतीदमखिलप्रमाणसाधारणमव्यवहितं फलमुक्तम् ॥ ३७ ॥

§ १४२. अव्यवहितमेव फलान्तरमाह–

**अज्ञाननिवृत्तिर्वा ॥३८॥**

§ १४३. प्रमाणप्रवृत्तेः पूर्वं प्रमातुर्विवक्षिते विषये यत् 'अज्ञानम्' तस्य 'निर्वृत्तिः' फलमित्यन्ये । यदाहुः–

15　　**"प्रमाणस्य फलं साक्षादज्ञानविनिवर्तनम् ।**
**केवलस्य सुखोपेक्षे शेषस्यादानहानधीः ॥"** [न्याया० २८] इति ॥३८॥

§ १४४. व्यवहितमाह–

**अवग्रहादीनां वा क्रमो[6]पजनधर्मा[7]णां पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं फलम् ॥३९॥**

20　§ १४५. अवग्रहेहावायधारणास्मृतिप्रत्यभिज्ञानोहानुमानानां क्रमेणोपजायमानानां यद्यत् पूर्वं तत्तत्प्रमाणं यद्यदुत्तरं तत्तत्फलरूपं प्रतिपत्तव्यम् । अवग्रहपरिणामवान् ह्यात्मा ईहारूपफलतया परिणमति इतीहाफलापेक्षया अवग्रहः प्रमाणम् । ततोऽपीहा प्रमाणमवायः फलम् । पुनरवायः प्रमाणं धारणा फलम् । ईहाधा[9]रणयोर्ज्ञानो[10]पादानत्वात् ज्ञानरूपतोन्नेया । ततो धारणा प्रमाणं स्मृतिः फलम् । ततोऽपि स्मृतिः प्रमाणं प्रत्यभिज्ञानं फलम् ।

---

१ कर्मस्था प्र० – ता–मू० । २ तथाहि कर्मस्था कर्तृस्था चेत् ( स्था च ) क्रिया प्रतीयते तथा (?) ज्ञानस्यापि । त(य)थाहि वह्निगता तावत् काचिद्दाहिका शक्तिरभ्युपेया यद्व्यापारात् काष्ठानि दग्धानि भवन्ति तथा काष्ठगता दाहक्रिया काचिदस्ति यस्यास्तानि भस्मीभवन्ति । एवमन्यत्रापि ज्ञानार्थयोर्भावनीयम् । ३ –०फलं तदि०–डे० । ४ वस्तुत ऐक्येऽपि ज्ञानोन्मुखोऽर्थप्रकाशः अर्थोन्मुखी अज्ञाननिवृत्तिः इति भेदः । ५ अव्यवहितम् । ६ –०पजननधर्मा०–सं–मू० । ७ –०धर्मणाम्–ता० । ८ एकोनचत्वारिंशत्तमं चत्वारिंशत्तमं च सूत्रद्वयं ता– मू० प्रतौ भेदकचिह्नं विना सहैव लिखितं दृश्यते–सम्पा० । ९ ईहायाश्चेष्टारूपत्वात् धारणायाश्च संस्काररूपत्वात् अज्ञानत्वमिति परस्य अभिसन्धिः । १० ज्ञानमुपादानं ययोर्ज्ञानस्योपादनं वा ।

ततोऽपि प्रत्यभिज्ञा प्रमाणमूहः फलम् । ततोऽप्यूहः प्रमाणमनुमानं फलमिति प्रमाणफलविभाग इति ॥ ३९ ॥

§ १४६. फलान्तरमाह–

## हानादिबुद्धयो वा ॥४०॥

§ १४७. हानोपादानोपेक्षाबुद्धयो वा प्रमाणस्य फलम् । फलबहुत्वप्रतिपादनं सर्वेषां फलत्वेन न विरोधो वैवक्षिकत्वात् फलस्येति प्रदिपादनार्थम् ॥ ४० ॥

§ १४८. एकान्तभिन्नाभिन्नफलवादिमतपरीक्षार्थमाह–

## प्रमाणाद्भिन्नाभिन्नम् ॥४१॥

§ १४९. करणरूपत्वात् क्रियारूपत्वाच्च प्रमाणफलयोर्भेदः । अभेदे प्रमाणफलभेदव्यवहारानुपपत्तेः प्रमाणमेव वा फलमेव वा भवेत् । अप्रमाणाद्व्यावृत्त्या प्रमाणव्यवहारः, अफलाद्व्यावृत्त्या च फलव्यवहारो भविष्यतीति चेत्; नैवम्; एवं सति प्रमाणान्तराद्व्यावृत्त्याऽप्रमाणव्यवहारः, फलान्तराद्व्यावृत्त्याऽफलव्यवहारोऽप्यस्तु, विजातीयादिव सजातीयादपि व्यावृत्तत्वाद्वस्तुनः ।

§ १५०. तथा, तस्यैवात्मनः प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेदः । भेदे त्वात्मान्तरवत्तदनुपपत्तिः । अथ यत्रैवात्मनि प्रमाणं समवेतं फलमपि तत्रैव समवेतमिति समवायलक्षणया प्रत्यासत्त्या प्रमाणफलव्यवस्थितिरिति नात्मान्तरे तत्प्रसङ्ग इति चेत्; न; समवायस्य नित्यत्वाद्व्यापकत्वान्नियतात्मवत्सर्वात्मस्वप्यविशेषान्न ततो नियतप्रमातृसम्बन्धप्रतिनियमः तत् सिद्धमेतत् प्रमाणात्फलं कथञ्चिद्भिन्नमभिन्नं चेति ॥ ४१ ॥

§ १५१ प्रमातारं लक्षयति–

## स्वपराभासी परिणाम्यात्मा प्रमाता ॥४२॥

§ १५२. स्वम् आत्मानं परं चार्थमाभासयितुं शीलं यस्य स 'स्वपराभासी' स्वोन्मुखतयाऽर्थोन्मुखतया चावभासनात् घटमहं जानामीति कर्मकर्तृक्रियाणां प्रतीतेः, अन्यतरप्रतीत्यपलापे प्रमाणाभावात् । न च परप्रकाशकत्वस्य स्वप्रकाशकत्वेन विरोधः प्रदीपवत् । नहि प्रदीपः स्वप्रकाशे परमपेक्षते । अनेनैकान्तस्वाभासिपराभासिवादिमतनिरासः । स्वपराभास्येव 'आत्मा प्रमाता' ।

---

१ –०पेक्षया बु०–ता० । २ अर्थप्रकाशादीनाम् । ३ –०क्षितत्वात्–ता० । ४ अ[न्य]प्रमाणात् । ५ –०लत्वव्य० –डे० । ६ प्रमाणान्तरात् । ७ यथैकात्मगतस्य प्रमाणस्य सम्बन्धि द्वितीयात्मगतं फलं न भवति तथैकात्मगतयोरपि मा भूदत्यन्तभेदस्योभयपक्षयोरप्यविशिष्टत्वात् । ८ –०तारं कथयति–डे० । ९ एतत्सूत्रानन्तरं ता–मू० प्रतौ एवं लिखितं वर्तते–"इत्याचार्यश्रीहेमचन्द्रविरचितायां प्रमाणमीमांसायां प्रथमस्याध्यायस्य प्रथममाह्निकम् । सं–मू० प्रतौ तु –०ध्यायस्याद्याह्निकम् । १० बौद्धस्य ।

§ १५३. तथा, परिणाम उक्तलक्षणः स विद्यते यस्य स 'परिणामी'। कूटस्थनित्ये ह्यात्मनि हर्षविषादसुखदुःखभोगादयो विवर्ताः प्रवृत्तिनिवृत्तिधर्माणो न वर्तेरन्। एकान्तनाशिनि[1] च कृतनाशाकृताभ्यागमौ स्याताम्, स्मृतिप्रत्यभिज्ञाननिहितप्रत्युन्मार्गणप्रभृतयश्च प्रतिप्राणिप्रतीता व्यवहारा विशीर्येरन्। परिणामिनि तूत्पादव्ययध्रौव्यधर्मण्यात्मनि सर्वमुपपद्यते। यदाहुः–

"यथाहेः कुण्डलावस्था व्यपैति तदनन्तरम्।
सम्भवत्यार्जवावस्था सर्पत्वं त्वनुवर्तते॥
तथैव नित्यचैतन्यस्वरूपस्यात्मनो हि न।
निःशेषरूपविगमः सर्वस्यानुगमोऽपि वा॥
किं त्वस्य विनिवर्तन्ते सुखदुःखादिलक्षणाः।
अवस्थास्ताश्च जायन्ते चैतन्यं त्वनुवर्तते॥
स्यातामत्यन्तनाशे हि कृतनाशाकृतागमौ।
सुखदुःखादिभोगश्च नैव स्यादेकरूपिणः॥
न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थां समाश्रिते।
ततोऽवस्था[2]वतस्तत्त्वात्[3] कर्तै[4]वाप्नोति तत्फलम्॥" [तत्त्वसं०का० २२३–२२७]

इति अनेनैकान्तनित्यानित्यवादव्युदासः। 'आत्मा' इत्यनात्मवादिनो व्युदस्यति। कायप्रमाणता त्वात्मनः प्रकृतानुपयोगान्नोक्तेति सुस्थितं प्रमातृलक्षणम्॥४२॥

इत्याचार्यश्रीहेमचन्द्रविरचितायाः प्रमाणमीमांसायास्तद्वृत्तेश्च
प्रथमस्याध्यायस्य प्रथममाह्निकम्[5]

---

१ एकान्तनाशिनी (?) २ अवस्थायाः। ३ –०वतस्तात्त्वात्–डे०। ०स्थासु तत्तत्त्वात्–तत्त्वसं० का० २२७। ४ एकत्वात्। ५ –०कम्। श्रेयः–ता०।

## ॥ अथ द्वितीयमाह्निकम् ॥

§ १. इहोद्दिष्टे प्रत्यक्षपरोक्षलक्षणे प्रमाणद्वये लक्षितं प्रत्यक्षम्। इदानीं परोक्ष-लक्षणमाह–

### अविशदः परोक्षम्[1] ॥ १ ॥

§ २. सामान्यलक्षणानुवादेन विशेषलक्षणविधानात् 'सम्यगर्थनिर्णयः' इत्यनुवर्तते। तेनाविशदः सम्यगर्थनिर्णयः परोक्षप्रमाणमिति ॥१॥

§ ३. विभागमाह–

### स्मृतिप्रत्यभिज्ञा[2]नोहानुमानागमास्तद्विधयः ॥ २ ॥

§ ४. 'तद्' इति परोक्षस्य परामर्शस्तेन परोक्षस्यैते प्रकारा न तु स्वतन्त्राणि प्रमाणान्तराणि प्रक्रान्तप्रमाणसङ्ख्याविघातप्रसङ्गात्।

§ ५. ननु स्वतन्त्राण्येव स्मृत्यादीनि प्रमाणानि किं नोच्यन्ते?, किमनेन द्रविडमण्डकभक्षणन्यायेन? । मैवं वोचः, परोक्षलक्षणसङ्गृहीतानि परोक्षप्रमाणान्न विभेदवर्तीनि; यथैव हि प्रत्यक्षलक्षणसङ्गृहीतानीन्द्रियज्ञान-मानस-स्वसंवेदन-योगिज्ञानानि सौगतानां न प्रत्यक्षादतिरिच्यन्ते, तथैव हि परोक्षलक्षणाक्षिप्तानि स्मृत्यादीनि न मूलप्रमाणसङ्ख्यापरिपन्थीनीति। स्मृत्यादीनां पञ्चानां द्वन्द्वः ॥२॥

§ ६. तत्र स्मृतिं लक्षयति–

### वासनोद्बोधहेतुका तदित्याकारा स्मृतिः ॥३॥

§ ७. 'वासना[3]' संस्कारस्तस्याः 'उद्बोधः[4]' प्रबोधस्तद्धेतुका तन्निबन्धना,

**"कालमसंखं संखं च धारणा होइ नायव्वा"** [ विशेषा० गा० ३३३ ]

इति वचनाच्चिरकालस्थायिन्यपि वासनाऽनुद्बुद्धा न स्मृतिहेतुः, आवरणक्षयोपशमसदृशदर्शनादिसामग्रीलब्धप्रबोधा[5] तु स्मृतिं जनयतीति 'वासनोद्बोधहेतुका' इत्युक्तम्। अस्या उल्लेखमाह 'तदित्याकारा[6]' सामान्योक्तौ नपुंसकनिर्देशस्तेन स घटः, सा पटी, तत् कुण्डल[7]मित्युल्लेखवती[8] मतिः स्मृतिः।

§ ८. सा च प्रमाणम् अविसंवादित्वात् स्वयं[9] निहितप्रत्युन्मार्गणादिव्यवहाराणां दर्शनात्। नन्वनुभूयमानस्य विषयस्याभावान्निरालम्बना स्मृतिः कथं प्रमाणम्? । नैवम्, अनुभूतेनार्थेन सालम्बनत्वोपपत्तेः, अन्यथा प्रत्यक्षस्या[10]प्यनुभूतार्थविषयत्वादप्रामाण्यं प्रसज्येत। स्वविषया[11]वभासनं स्मृतेरप्यविशिष्टम्। विनष्टो विषयः कथं स्मृतेर्जनकः?, तथा-

१ अत्र प्रथमं द्वितीयं च सूत्रद्वयं ता–मू० प्रतौ भेदकचिह्नं विना सहैव लिखितं दृश्यते–सम्पा०। २ –०भिज्ञोहा०–सं–मू०। ३ धारणा। ४ स्मृतिजननाभिमुख्यम्। ५–०धा अनुस्मृ०-मु-पा०। ६ अभ्यासदशापन्नायां गुणनादौ तदित्याकाराभावात् प्रायिकमिदम्। ७ कुण्डमि०–डे०। ८ –०वती स्मृ०–डे०। ९ अविसंवादित्वमस्या [अ]सिद्धमिति चेदित्याह। १० यद्यनुभूतेनार्थेन सालम्बनत्वेऽपि स्मृतेरप्रामाण्यमातिष्ठसे तदा प्रत्यक्षस्यापि किं नाप्रामाण्यं भवेदिति एकोद्देशेन तस्यापि निरालम्बनत्वात्। ११ अनुभूतविषय०।

चार्थाजन्यत्वान्न प्रामाण्यमस्या इति चेत्; तत् किं प्रमाणान्तरेऽप्यर्थजन्यत्वम[1]विसंवाद-हेतुरिति विप्रलब्धोऽसि?। मैवं मुहः, यथैव हि प्रदीपः स्वसामग्रीबललब्धजन्मा घटादि-भिरजनितोऽपि तान् प्रकाशयति तथैवावरणक्षयोपशमसव्यपेक्षेन्द्रियानिन्द्रियबललब्ध-जन्म संवेदनं विषयमवभासयति। "नाननुकृतान्वयव्यतिरेकं कारणम् नाकारणं
5 विषयः" इति तु प्रलापमात्रम्, योगिज्ञानस्यातीतानागतार्थगोचरस्य तदजन्यस्यापि प्रामाण्यं प्रति विप्रतिपत्तेरभावात्। किंच, स्मृतेरप्रामाण्येऽनुमानाय दत्तो जलाञ्जलिः, तया व्याप्तेरविषयी[2]करणे तदुत्थानायोगात्; लिङ्गग्रहण-सम्बन्धस्मरणपूर्वकमनुमानमिति हि सर्ववादिसिद्धम्। ततश्च स्मृतिः प्रमाणम्, अनुमानप्रामाण्यान्यथानुपपत्तेरिति[3] सिद्धम् ॥ ३ ॥

10 § ९. अथ प्रत्यभिज्ञानं लक्षयति–

**दर्शनस्मरणसम्भवं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रति-योगीत्यादिसङ्कलनं प्रत्यभिज्ञानम् ॥४॥**

§ १०. 'दर्शनम्' प्रत्यक्षम्, 'स्मरणम्' स्मृतिस्ताभ्यां[4] सम्भवो यस्य तत्तथा दर्शन-स्मरण[5]कारणकं सङ्क[6]लनाज्ञानं 'प्रत्यभिज्ञानम्'। तस्योल्लेखमाह–'तदेवेदम्', सामान्यनिर्दे-
15 शेन नपुंसकत्वम्, स एवायं घटः, सैवेयं पटी, तदेवेदं कुण्डमिति। 'तत्सदृशः' गोस-दृशो गवयः, 'तद्विलक्षणः' गोविलक्षणो महिषः, 'तत्प्रतियोगि' इदमस्मादल्पं महत् दूरमासन्नं वेत्यादि। 'आदि'ग्रहणात्–

"रोमशो दन्तुरः श्यामो वामनः पृथुलोचनः।
यस्तत्र चिपिटघ्राणस्तं चैत्रमवधारयेः॥" [ न्यायम० पृ० १४३ ]
20 "पयोम्बुभेदी हंसः स्यात्षट्पादै[7]र्भ्रमरः स्मृतः।
सप्तपर्णस्तु विद्वद्भिर्विज्ञेयो विषमच्छदः॥
पञ्चवर्णं भवेद्रत्नं मेचकाख्यं पृथुस्तनी।
युवतिश्चैकशृङ्गोऽपि गण्डकः परिकीर्तितः॥"

इत्येवमादिशब्दश्रवणात्तथाविधानेव चैत्रहंसादीनवलोक्य तथा[8] सत्यापयति यदा, तदा
25 तदपि संकलना[9]ज्ञानमुक्तम्, दर्शनस्मरणसम्भवत्वाविशेषात्। यथा वा औदीच्येन[10] क्रमेलकं

---

१ अर्थजन्यत्वात् ज्ञानस्य प्रामाण्याभ्युपगमे मरुमरीचिकादौ जलज्ञानमप्यर्थजन्यत्वात् प्रमाणं स्यात्। अथ प्रतिभासमानार्थजन्यं प्रमाणमिष्यते तदानुमानं न स्यात् प्रमाणम्। अनुमानं ह्यनर्थसामान्यप्रतिभासि, न च तेन जन्यम्, भवन्मते सामान्यस्यावस्तुत्वात्। यत् प्रमाणं तदनर्थजन्य(तदर्थज)मेवेति अतिव्याप्ति (०वेति व्याप्ति)रपि दुष्टा स्वसंवेदनप्रत्यक्षेण व्यभिचारात् तद्धि स्वात्मविषयं, न च तेन जन्यम्। २ व्याप्तेरग्रहणेऽग्रहणं त्वप्रमाणत्वात्। ३ रिति ॥ अथ मु-पा। ४ क्वचिद्द्वयस्ताभ्यामपि यथेदमस्माद्भिन्नमित्यादिकं प्रत्यभिज्ञानं दर्श-नादेव स्मरणरहितात्। तस्मात् भिन्नमित्यादिकं केवलादेव स्मरणात् प्रत्यभिज्ञानम्। ५ मदीयेन गृहस्थितेन गवा सदृशोऽयं गवय इत्यादिकम् [अत्र टिप्पणकारेण उभयकारणकत्वं उदाहृतम्–सम्पा०]। ६ एकत्वसादृ-श्यवैसदृश्यादिनाऽर्थद्वयघटनं सङ्कलना। ७ –०पदै०–मु०। ८ तथा वचनं सत्या०-डे०। ९ संकलनमु०-डे०। १० अत्र उदीच्येन इति सुचारु।

निन्दतोक्तम् 'धिक्करभमतिदीर्घवक्रग्रीवं[1] प्रलम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपशदं[2][3] पशूनाम्'इति । तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य 'नूनमयमर्थोऽस्य करभशब्दस्य'इति [ यदेवैति[4] ] तदपि दर्शनस्मरणकारणकत्वात् सङ्कलनाज्ञानं प्रत्यभिज्ञानम् ।

§ ११. येषां तु सादृश्यविषयमुपमानाख्यं प्रमाणान्तरं तेषां वैलक्षण्यादिविषयं प्रमाणान्तरमनुषज्येत । यदाहुः[5]–

"उपमानं प्रसिद्धार्थसाधर्म्यात् साध्यसाधनम्[6] ।
तद्वैधर्म्यात् प्रमाणं किं स्यात् संज्ञिप्रतिपादनम् ॥" [ लघीय० ३. १० ]

"इदमल्पं महद् दूरमासन्नं प्रांशु[7] नेति वा ।
व्यपेक्षातः[8] समक्षेऽर्थे विकल्पः[9] साधनान्तरम्[10] ॥" [लघीय० ३. १२] इति ।

§ १२. अथ साधर्म्यमुपलक्षणं योग[11]विभागो[12] वा करिष्यत इति चेत्; तर्ह्यकुशलः सूत्रकारः स्यात्, सूत्रस्य लक्षणरहितत्वात् । यदाहुः–

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तो[13]भमनवद्यं च सूत्रं सूत्रविदो विदुः ॥"

अस्तोभमनधिकम् ।

§ १३. ननु 'तत्'इति स्मरणम् 'इदम्' इति प्रत्यक्षमिति ज्ञानद्वयमेव, न ताभ्यामन्यत् प्रत्यभिज्ञानाख्यं प्रमाणमुत्पश्यामः । नैतद्युक्तम्, स्मरणप्रत्यक्षाभ्यां प्रत्यभिज्ञाविषयस्यार्थस्य ग्रहीतुमशक्यत्वात् । पूर्वापराकारैक[14]धुरीणं हि द्रव्यं प्रत्यभिज्ञानस्य विषयः। न च तत् स्मरणस्य गोचरस्तस्यानुभूतविषयत्वात् । यदाहुः[15]–

"पूर्व[16]प्रमितमात्रे हि जायते स इति स्मृतिः ।
स एवायमितीयं तु प्रत्यभिज्ञा[17]ऽतिरेकिणी ॥" [ तत्त्वसं० का० ४५३ ]

नापि प्रत्यक्षस्य[18] गोचरः, तस्य[19] वर्तमानविवर्त[20]मात्रवृत्तित्वात् । न च दर्शनस्मरणाभ्यामन्य[21]द् ज्ञानं नास्ति, दर्शनस्मरणोत्तरकालभाविनो ज्ञानान्तरस्यानुभूतेः । न चानुभूयमानस्यापलापो युक्तः अतिप्रसङ्गात् ।

§ १४. ननु प्रत्यक्षमेवेदं प्रत्यभिज्ञानम् इत्येके[22] । नैवम्, तस्य सन्निहितवार्तमानिकार्थविषयत्वात् ।

"सम्बद्धं[23] वर्तमानं च गृह्यते चक्षुरादिना" [ श्लोकवा० सूत्र ४ श्लो० ८४ ]

इति मा स्म विस्मरः । ततो नातीतवर्तमानयोरेकत्वमध्यक्षज्ञानगोचरः । अथ स्मरण[24]सह-

---

१ –०ग्रीवप्र०-ता० । २–०मपसदं –मु० –०मपशब्दं–डे० । ३ निकृष्टम् । ४ तात्पर्य० पृ० १९८ । ५ यदाह–ता० । ६ सादृश्यसाधनम् । ७ दीर्घम् । ८ अपेक्षका ह्यल्पमहदादिव्यापाराः । ९ अक्षनिरपेक्षं मानसं ज्ञानं विकल्पः । १० प्रमाणान्तरं प्राप्नोति । ११ उपमानमिति सूत्रावयवयोगः । १२ उपमानं द्विधा साधर्म्यतो वैधर्म्यतश्चेति विभागः । १३ पूरणार्थवादिनिपातरहितमस्तोभम् । १४ तदेवेदमित्यत्रैकत्वं विषयः, गोसदृशो गवय इत्यत्र तु सादृश्यम् । १५ यदाह–ता० । १६ पूर्वप्रवृत्तमा०–मु–पा । १७ पूर्वप्रमितमात्रादधिका । १८–०स्य तस्य विव०–डे० । १९ तस्येति प्रत्यक्षस्य । २० विवर्तः परिणामः पर्यायः इति यावत् । २१–०मन्यज्ञा०–डे० । २२ वैशेषिकादयः । २३ चक्षुरादीन्द्रियसम्बन्धि । २४ सहायम् ।

कृतमिन्द्रियं तदेकत्वविषयं प्रत्यक्षमुपजनयतीति प्रत्यक्षरूपतास्य गीयत इति चेत्; न, स्वविषय[1]विनियमितमूर्तेरिन्द्रियस्य विषयान्तरे[2] सहकारिशतसमवधानेऽप्यप्रवृत्तेः। नहि परिमलस्मरणसहायमपि चक्षुरिन्द्रियमविषये गन्धादौ प्रवर्त्तते। अविषयश्चातीतवर्तमानावस्थाव्याप्येकं द्रव्यमिन्द्रियाणाम्। नाप्यदृष्ट[3]सहकारिसहितमिन्द्रियमेकत्वविषयमिति

5 वक्तुं युक्तम् उक्तादेव हेतोः[4]। किंच, अदृष्टसव्यपेक्षादेवात्मनस्तद्विज्ञानं भवतीति वरं वक्तुं युक्तम्। दृश्यते हि स्वप्नविद्यादिसंस्कृतादात्मनो विषयान्तरेऽपि विशिष्टज्ञानोत्पत्तिः। ननु यथाञ्जनादिसंस्कृतं चक्षुः सातिशयं भवति तथा स्मरणसहकृतमेकत्वविषयं भविष्यति। नैवम्, इन्द्रियस्य स्वविषयानतिलङ्घनेनैवातिशयोपलब्धेः, न विषयान्तरग्रहणरूपेण। यदाह भट्टः–

10 "यश्चाप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रोत्रवृत्तितः॥" [ श्लोकवा० सूत्र २ श्लो० ११४ ]

इति। तत् स्थितमेतत् विषयभेदात्प्रत्यक्षादन्यत्परोक्षान्तर्गतं प्रत्यभिज्ञानमिति।

§ १५. न चैतदप्रमाणम् विसंवादाभावात्। क्वचिद्विसंवादादप्रामाण्ये[11] प्रत्यक्षस्यापि तथा प्रसङ्गो दुर्निवारः। प्रत्यभिज्ञानपरिच्छिन्न[12]स्य चात्मादीनामेकत्वस्याभावे बन्धमो-

15 क्षव्यवस्था नोपपद्यते। एकस्यैव हि बद्धत्वे मुक्त[13]त्वे च बद्धो दुःखितमात्मानं जानन् मुक्तिसुखार्थी प्रयतेत। भेदे त्वन्य एव दुःख्यन्य एव सुखीति कः किमर्थं वा प्रयतेत?। तस्मात्सकलस्य[14] दृष्टादृष्टव्यवहारस्यैकत्वमूलत्वादेकत्वस्य च प्रत्यभिज्ञायत्तजीवितत्वाद्भवति प्रत्यभिज्ञा प्रमाणमिति॥ ४॥

§ १६. अथोहस्य लक्षणमाह–

20 **उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानम् ऊहः॥ ५॥**

§ १७. 'उपलम्भः' प्रमाणमात्रमत्र गृह्यते न प्रत्यक्षमेव अनुमेयस्यापि साध[15]नस्य सम्भवात्, प्रत्यक्ष[16]वदनुमेयेष्वपि व्याप्तेरविरोधात्। 'व्याप्तिः' वक्ष्यमाणा तस्या 'ज्ञानम्' तद्ग्राही निर्णयविशेष 'ऊहः'।

§ १८. न चायं व्याप्तिग्रहः प्रत्यक्षादेवेति वक्तव्यम्। नहि प्रत्यक्षं यावान् कश्चिद्

25 धूमः स देशान्तरे कालान्तरे वा पावकस्यैव कार्यं नार्थान्तरस्येतीयतो व्यापारान् कर्तुं समर्थं सन्निहितविषयबलोत्पत्तेरविचारकत्वाच्च।

§ १९. नाप्यनुमानात्, तस्यापि व्याप्तिग्रहणकाले योगीव प्रमाता सम्पद्यत इत्ये-

---

१ स्वविषयवार्तमानिकरूपादौ। २ विषयान्तरे गन्धादौ। ३ अदृष्टं भाग्यं कर्मेत्यर्थः। ४ विषयान्तराप्रवृत्तिरूपाद्धेतोः। ५–०द्यासं०–डे०। ६ नहि संस्कृतमपि चक्षुर्गन्धादिग्रहणे शक्तम्। ७ स्वविषय०। ८ दूरसूक्ष्मादिदर्शनेन चक्षुषोऽतिशयो भवति, न श्रवणस्य, रूपविषयेष्वव्यापारात्। ९ नहि रूपे श्रौत्री वृत्तिः संक्रामति। १० विषयभेदादित्ययं हेतुः। ११ यथा स एव क्षिप्रो जक्ष्यते (?)। १२ स एवायमिति। १३–०त्वे सति च–डे०। १४–०स्य दृष्टव्य०–डे०। १५ शब्दानित्यत्वे साध्ये कृतकत्वं हि साधनम् प्रत्ययभेदभेदित्वेनानुमेयम्। १६ बाष्पादिभावेन सन्दिह्यमाने धूमेऽग्नेरनुमेयस्यापि साधनत्वं वक्ष्यते।

वंभूतभारासमर्थत्वात् । सामर्थ्येऽपि प्रकृतमेवानुमानं व्याप्तिग्राहकम्, अनुमानान्तरं वा ? । तत्र प्रकृतानुमानात् व्याप्तिप्रतिपत्तावितरेतराश्रयः[1] । व्याप्तौ हि प्रतिपन्नायामनुमानमात्मानमासादयति, तदात्मलाभे च व्याप्तिप्रतिपत्तिरिति । अनुमानान्तरात्तु व्याप्तिप्रतिपत्तावनवस्था तस्यापि गृहीतव्याप्तिकस्यैव प्रकृतानुमानव्याप्तिग्राहकत्वात् । तद्व्याप्तिग्रहश्च यदि स्वत एव, तदा पूर्वेण किमपराद्धं येनानुमानान्तरं मृग्यते । अनुमानान्तरेण चेत्; 5
तर्हि युगसहस्रेष्वपि व्याप्तिग्रहणासम्भवः ।

§ २०. ननु यदि निर्विकल्पकं प्रत्यक्षमविचारकम् तर्हि तत्पृष्ठभावी विकल्पो व्याप्तिं ग्रहीष्यतीति चेत्; नैतत्, निर्विकल्पकेन व्याप्तेरग्रहणे विकल्पेन ग्रहीतुमशक्यत्वात् निर्विकल्पकगृहीतार्थविषयत्वाद्विकल्पस्य । अथ निर्विकल्पकविषयनिरपेक्षोऽर्थान्तरगोचरो विकल्पः; स तर्हि प्रमाणमप्रमाणं वा ? । प्रमाणत्वे[2] प्रत्यक्षानुमानातिरिक्तं प्रमाणान्तरं 10
तितिक्षितव्यम् । अप्रामाण्ये तु ततो व्याप्तिग्रहणश्रद्धा षण्ढात्तनयदोहदः । एतेन[3]–"अनु[4]पल[5]म्भात् कारणव्यापकानुपलम्भाच्च कार्यकारणव्याप्य[6]व्यापकभावावगमः" इति प्रत्युक्तम्[7], अनुपलम्भस्य प्रत्यक्षविशेषत्वेन कारणव्यापकानुपलम्भयोश्च लिङ्गत्वेन[8] तज्ज[9]नितस्य तस्यानुमानत्वात्, प्रत्यक्षानुमानाभ्यां च व्याप्तिग्रहणे दोषस्याभिहितत्वात् ।

§ २१. वैशेषिकास्तु प्रत्यक्षफलेनोहापोहविकल्पज्ञानेन व्याप्तिप्रतिपत्तिरित्याहुः । 15
तेषामप्यध्यक्षफलस्य प्रत्यक्षा[10]नुमानयोरन्यतरत्वे व्याप्ते[11]रविषयीकरणम्, तदन्यत्वे च प्रमाणान्तरत्वप्रसक्तिः । अथ व्याप्तिविकल्पस्य फल[12]त्वान्न प्रमाणत्वमनुयोक्तुं युक्तम्; न, एतत्फलस्या[13]नुमानलक्षणफलहेतुतया प्रमाणत्वाविरोधात् सन्निकर्षफलस्य विशेषण[14]ज्ञानस्येव विशेष्य[15]ज्ञानापेक्षयेति ।

§ २२. यौगास्तु तर्क[16]सहितात् प्रत्यक्षादेव [17]व्याप्तिग्रह इत्याहुः । तेषामपि यदि 20
न केवलात् प्रत्यक्षाद्व्याप्तिग्रहः किन्तु तर्कसहकृतात् तर्हि तर्कादेव व्याप्तिग्रहोऽस्तु । किमस्य तपस्विनो यशोमार्जनेन, प्रत्यक्षस्य वा तर्कप्रसादलब्धव्याप्तिग्रहापलापकृतघ्नत्वारोपेणेति ? । अथ तर्कः प्रमाणं न भवतीति न ततो व्याप्तिग्रहणमिष्यते । कुतः पुनरस्य न प्रमाणत्वम्, अव्यभिचारस्तावदिहापि प्रमाणान्तरसाधारणोऽस्त्येव[18] ? । व्याप्तिलक्षणेन विषयेण विष[19]-

१–°श्रयम्–डे° । २–°त्वे न प्रत्य°–डे° । ३ एतेनानुपलम्भात् कार्य°–डे° । ४ (?) न उपलम्भात् प्रत्यक्षात् । नानुमानात् । नाऽत्र धूमोऽग्नेरभावादित्यनुपलम्भः ॥१॥ नात्र शिंशपा वृक्षाऽभावात् ॥२॥ "**धूमाधी[:] वह्निविज्ञानं धूमज्ञानमधीस्तयोः । प्रत्यक्षानुपलम्भाभ्यामिति पञ्चभिरन्वयः ॥**" ५ (?) नास्त्यत्र घटो अनुपलम्भात् स्वप्रत्यक्षानुपलम्भादित्यर्थः, स्वभावानुपलम्भो हि धूमाधीरित्युल्लेखलक्षणः कार्यकारणव्याप्यव्यापकभावावगमे व्यापिपर्ति ततस्तस्मादपि भवति स बौद्धमते । ६ (?) कार्यकारणस्यावगमो व्यापकानुपलम्भाद्व्याप्यव्यापकत्वस्यानुपलम्भात् तूभयस्य किन्तु सोप्यूहादेवेति । ७ निराकृतम् । ८ अनुमानत्वेन । ९ यद्धि लिङ्गाज्जायते ज्ञानं तदनुमानमेव । १० प्रत्यक्षस्य हि फलं प्रत्यक्षमनुमानं वा । तत्र प्रत्यक्षं घटोऽयमिति अनुमानं तु अग्निरत्र धूमादिति । ११ अग्रहणमित्युक्तयुक्तेः । १२ प्रत्यक्षफलत्वेनेति हि उक्तम् । १३ फलस्याप्यनु°– मु–पा° । १४ सामान्यज्ञानाद्विशेषज्ञानम् (?) । १५ विशेष्यज्ञानं विशेषणज्ञानं प्रमाणम् (?) । १६ व्याप्याभ्युपगमे व्यापकप्रसञ्जनं तर्कः । [१७ "**व्यापकं तदतन्निष्ठं व्याप्यं तन्निष्ठमेव च । साध्यं व्यापकमित्याहुः साधनं व्याप्यमुच्यते ॥**" "**प्रयोगेऽन्वयवत्येवं व्यतिरेके विपर्ययः ।**" १८–°स्त्वेव–डे° । १९ प्रमेयाधीना प्रमाणव्यवस्था ।

यवत्त्वमपि न नास्ति। तस्मात् प्रमाणान्तरागृहीतव्याप्तिग्रहणप्रवणः प्रमाणान्तरमूहः ॥५॥

§ २३. व्याप्तिं लक्षयति–

**व्याप्तिर्व्यापकस्य व्याप्ये सति भाव एव व्याप्यस्य वा तत्रैव भावः ॥ ६ ॥**

§ २४. 'व्याप्तिः' इति यो[1] व्याप्नोति यश्च[2] व्याप्यते तयोरुभयोर्धर्मः[3]। तत्र यदा व्यापक-[4]धर्मतया विवक्ष्यते तदा 'व्यापकस्य[5]' गम्यस्य 'व्याप्ये[6]' धर्मे 'सति', यत्र धर्मिणि[7] व्याप्य[8]-मस्ति तत्र सर्वत्र 'भाव एव' व्यापकस्य स्वगतो धर्मो व्याप्तिः। ततश्च[9] व्याप्यभावापेक्षा[10] [11]व्याप्यस्यैवं[12] व्याप्तताप्रतीतिः[13]। नत्वेवमवधार्यते–व्यापकस्यैव व्याप्ये सति भाव इति, हेत्व-भावप्रसङ्गात्[14] अव्यापकस्यापि मूर्तत्वादे[15]स्तत्र भावात्। नापि–व्याप्ये सत्येवेत्यवधार्यते, प्रयत्नानन्तरीयकत्वादे[16]रहेतुत्वापत्तेः, साधारणश्च[17] हेतुः स्यान्नित्यत्वस्य प्रमेयेष्वेव भावात्।

§ २५. यदा तु व्याप्यधर्मतया व्याप्तिर्विवक्ष्यते तदा 'व्याप्यस्य वा' गमकस्य 'तत्रैव' व्यापके गम्ये सति यत्र धर्मिणि[18] व्यापकोऽस्ति तत्रैव 'भावः' न तदभावेऽपि व्याप्तिरिति। अत्रापि नैवमवधार्यते–व्याप्यस्यैव तत्र भाव इति, हेत्व[19]भावप्रसङ्गादव्याप्यस्यापि तत्र[20] भावात्। नापि–व्याप्यस्य तत्र[21] भाव एवेति, सपक्षैकदेशवृत्तेरहेतुत्वप्राप्तेः साधारणस्य च हेतुत्वं स्यात्, प्रमेयत्वस्य नित्येष्ववश्यंभावादिति।

§ २६. व्याप्यव्यापकधर्मतासङ्कीर्तनं तु व्याप्तेरुभयत्र[22] तुल्यधर्मतयैकाकारा प्रती-तिर्मा भूदिति प्रदर्शनार्थम्। तथाहि–पूर्वत्रा[23]योगव्यवच्छेदेनावधारणम् उत्तरत्रा[24]न्ययोग-व्यवच्छेदेनेति कुत उभयत्रैकाकारता व्याप्तेः?। तदुक्तम्–

> "लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत् पुनः।
> नियमस्य विपर्यासे[25]ऽसम्बन्धो लिङ्गलिङ्गिनोः॥" इति ॥ ६ ॥

§ २७. अथ क्रमप्राप्तमनुमानं लक्षयति–

**साधनात्साध्यविज्ञानम् अनुमानम् ॥७॥**

---

१ अग्न्यादिः। २ धूमादिः। ३ पर्वतः (?)। ४ अग्नितया। ५ अग्निरूपस्य साध्यस्य। ६ धूमे। ७ पर्वतादौ। ८ धूमः। ९ ननु व्याप्तेरुभयधर्माविशेषे कथं व्याप्तताप्रतीतिः हेतोरेव, न व्यापकस्यापि, हेतोरेव हि व्याप्ततां स्मरन्ति तथा चाहुः–"**व्याप्तो हेतुस्त्रिधैव सः**" [ हेतु० १ ] इत्याशङ्क्याह—ततश्चेति। १० –०पेक्षया–डे०। ११ व्याप्यस्यैव प्रतीतिः–ता०। १२–०स्यैव व्याप्यताप्रतीतिः–मु०। १३ व्यापकेन साध्येन कर्त्रा व्याप्यभावो व्याप्यत्वं हेतोस्तदा(द)पेक्षते व्याप्तताप्रतीतिः। १४ अग्नेर्हेतुत्वं स्यात् (?)। १५ [अ]व्यापकस्यापि हेतोर्मूर्तत्वादेस्तत्र पर्वते भावात्। १६ कृतकत्वादेः अत्र हि व्याप्यस्य सत्त्वमेव नास्ति विद्युदादिना व्यभिचारात्। विद्युदादौ व्यापकत्वम(कम)नित्यत्वं प्रयत्नानन्तरीयकत्वादिविनाप्यस्ति इति। १७ साधारणहेत्वाभासोऽसम्यग् हेतुः स्यादिति। १८ पर्वतादौ। १९ व्याप्यस्य धूमस्य हेतुत्वं न स्यात्। व्याप्तौ सत्यां हेतुभावः। व्याप्तिस्त्वीदृशी कुत्रापि नास्ति। २० व्यापकस्यापि वह्नेस्तत्र पर्वते भावात्। २१ यत्र व्यापकोऽस्ति तत्र। २२ उभयत्रेति साध्ये साधने च। २३ भाव एव। २४ व्यापकधर्मत्वे। २५ लिङ्ग एव लिङ्गी लिङ्गिनि सति इतरद्भवत्येवेति विपर्यासः।

§ २८. साधनं साध्यं च वक्ष्यमाणलक्षणम् । दृष्टा[1]दुपदिष्टाद्वा[2] 'साधनात्' यत् 'साध्यस्य' 'विज्ञानम्' सम्यगर्थनिर्णयात्मकं तदनुमीयतेऽनेनेति 'अनुमानम्' लिङ्गग्रहणसम्बन्धस्मरणयोः पश्चात्[3] परिच्छेदनम् ॥ ७ ॥

**तत् द्विधा स्वार्थं परार्थं च ॥ ८ ॥**

§ २९. 'तत्' अनुमानं द्विप्रकारं स्वार्थ-परार्थभेदात् । स्वव्यामोहनिवर्तनक्षमम् 'स्वार्थम्'[4] । परव्यामोहनिवर्तनक्षमम् 'परार्थम्'[5] ॥ ८ ॥

§ ३०. तत्र स्वार्थं लक्षयति–

**स्वार्थं स्वनिश्चितसाध्याविनाभावैकलक्षणात् साधनात् साध्यज्ञानम् ॥ ९ ॥**

§ ३१. साध्यं विनाऽभवनं साध्याविनाभावः स्वेनात्मना निश्चितः[6] साध्याविनाभाव[7] एवैकं लक्षणं यस्य तत् 'स्वनिश्चितसाध्याविनाभावैकलक्षणम्' तस्मात्तथाविधात् 'साधनात्' लिङ्गात् 'साध्यस्य' लिङ्गिनो 'ज्ञानम' 'स्वार्थम्' अनुमानम्। इह च न योग्यतया लिङ्गं परोक्षार्थप्रतिपत्तेरङ्गम्, यथा बीजमङ्कुरस्य, अदृष्टाद्[8] धूमादग्नेरप्रतिपत्तेः; नापि स्वनिश्च(स्वविष)यज्ञानापेक्षं यथा प्रदीपो घटादेः, दृष्टादप्यनिश्चिताविनाभावादप्रतिपत्तेः । तस्मात्परोक्षार्थनान्तरीयकतया निश्चयनमेव लिङ्गस्य व्यापार इति 'निश्चित'ग्रहणम्[9] ।

§ ३२. ननु चासिद्धविरुद्धानैकान्तिकहेत्वाभासनिराकरणार्थं हेतोः पक्षधर्मत्वम्, सपक्षे सत्त्वम्, विपक्षाद् व्यावृत्तिरिति त्रैलक्षण्यमाचक्षते भिक्षवः। तथाहि–अनुमेये धर्मिणि लिङ्गस्य सत्त्वमेव निश्चितमित्येकं रूपम् । अत्र सत्त्ववचनेनासिद्धं चाक्षुषत्वादि[10] निरस्तम् । एवकारेण पक्षैकदेशासिद्धो निरस्तो यथा अनित्यानि पृथिव्यादीनि भूतानि गन्धवत्त्वात् । अत्र पक्षीकृतेषु पृथिव्यादिषु चतुर्षु भूतेषु पृथिव्यामेव गन्धवत्त्वम् । सत्त्ववचनस्य पश्चात्कृते[11]नैवकारेणासाधारणो धर्मो निरस्तः । यदि ह्यनुमेय एव सत्त्वमित्युच्येत श्रावणत्व[12]मेव हेतुः[13] स्यात् । निश्चितग्रहणेन सन्दिग्धा[14]सिद्धः सर्वो निरस्तः । सपक्षे एव सत्त्वं निश्चितमिति द्वितीयं रूपम्। इहापि सत्त्वग्रहणेन विरुद्धो निरस्तः[15]। स हि नास्ति सपक्षे। एवकारेण साधारणानैकान्तिकः[16], स हि न सपक्षे एव वर्तते किं तु विपक्षेऽपि । सत्त्वग्रहणात् पूर्वमवधारणकरणेन सपक्षाव्यापिनोऽपि प्रयत्नानन्तरीयकत्वादे[17]र्हेतुत्वमुक्तम्, पश्चादवधारणे

---

१ दृष्टिपथमागतात् । २ परार्थानुमाने कथितात् । ३ अनेन अतः पश्चादर्थता । ४ स्वस्मायिदं स्वार्थं येन स्वयं प्रतिपद्यते । ५ परस्मायिदं परार्थं येन परः प्रतिपद्यते । ६–० श्चितं सा०–डे० । ७–०भावैक० –डे० । ८–अग्निज्ञानं प्रति धूमस्य योग्यता शक्तिविशेषोऽस्त्येव परं दृष्टो हि धूमो धूमध्वजं गमयति नादृष्ट इति । ९ एतेन धूमो धूमवत्त्वेन निश्चिताविनाभावस्य गमको नान्यथा इत्यावेदितम् । १० यथाऽनित्यः शब्दः चाक्षुषत्वात् घटवदित्यत्र शब्दे चाक्षुषत्वमसिद्धम् । ११ सत्त्वपदाऽग्रतः । १२–०श्रावणमेव–डे० । १३ यथाऽनित्यः शब्दः श्रावणत्वादित्यनित्यत्वे साध्ये श्रावणत्वमेव हेतुर्घटे व्यभिचरतीति । १४ धूमो बाष्पो वा इति सन्देहे धूमादेरग्निसाधनम् । १५ अनेन सत्त्ववचनेन साधारणोऽपि निरस्यते । १६ निरस्त इति संबन्धः । १७ यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवत् । घटे प्रयत्नानन्तरीयकत्वं विद्यते, न विद्युति परम्, तथापि प्रयत्नानन्तरीयकत्वस्य हेतुत्वं सपक्षैकदेशत्वात् ।

हि अयमर्थः स्यात्—सपक्षे सत्त्वमेव यस्य स हेतुरिति प्रयत्नानन्तरीयकत्वं न हेतुः स्यात्। निश्चितवचनेन सन्दिग्धान्वयोऽनैकान्तिको निरस्तः यथा सर्वज्ञः कश्चिद्वक्तृत्वात्, वक्तृत्वं हि सपक्षे[3] सर्वज्ञे सन्दिग्धम्। विपक्षे त्वसत्त्वमेव निश्चितमिति तृतीयं रूपम्। तत्रासत्त्वग्रहणेन विरुद्धस्य निरासः। विरुद्धो हि विपक्षेऽस्ति। एवकारेण साधारणस्य विपक्षैकदेशवृत्तेर्निरासः, प्रयत्नानन्तरीयकत्वे हि साध्येऽनित्यत्वं विपक्षैकदेशे विद्युदादावस्ति, आकाशादौ नास्ति। ततो नियमेनास्य निरासोऽसत्त्वशब्दात्। पूर्वस्मिन्नवधारणे हि अयमर्थः स्यात्—विपक्ष एव यो नास्ति स हेतुः, तथा च प्रयत्नानन्तरीयकत्वं सपक्षेऽपि नास्ति ततो न हेतुः स्यात्ततः पूर्वं न कृतम्। निश्चितग्रहणेन सन्दिग्धविपक्षव्यावृत्तिकोऽनैकान्तिको निरस्तः। तदेवं त्रैरूप्यमेव हेतोरसिद्धादिदोषपरिहारक्षममिति तदेवाभ्युपगन्तुं युक्तमिति किमेकलक्षणकत्वेनेति?।

§ ३३. तदयुक्तम्, अविनाभावनियमनिश्चयादेव दोषत्रयपरिहारोपपत्तेः। अविनाभावो ह्यन्यथानुपपन्नत्वम्। तच्चासिद्धस्य विरुद्धस्य व्यभिचारिणो वा न सम्भवति। त्रैरूप्ये तु सत्यप्यविनाभावाभावे हेतोरगमकत्वदर्शनात्, यथा स श्यामो मैत्रतनयत्वात् इतरमैत्रपुत्रवदित्यत्र। अथ विपक्षान्नियमवती व्यावृत्तिस्तत्र न दृश्यते ततो न गमकत्वम्; तर्हि तस्या एवाविनाभावरूपत्वादितररूप[10]सद्भावेऽपि तदभावे[11] हेतोः स्वसाध्यसिद्धिं प्रति गमकत्वानिष्टौ सैव प्रधानं लक्षणमस्तु। तत्सद्भावे[12]ऽपररूपद्वयनिरपेक्षतया गमकत्वोपपत्तेश्च, यथा सन्त्यद्वैतवादिनो[13]ऽपि प्रमाणानि इष्टानिष्टसाधन[14]दूषणान्यथानुपपत्तेः। न चात्र पक्षधर्मत्वं सपक्षे सत्त्वं चास्ति, केवलमविनाभावमात्रेण गमकत्वोपपत्तिः[15]। ननु पक्षधर्मताऽभावे श्वेतः प्रासादः काकस्य कार्ष्ण्यादित्यादयोऽपि हेतवः प्रसज्येरन्; नैवम्, अविनाभावबलेनैवापक्षधर्माणामपि गमकत्वाभ्युपगमात्। न चेह सोऽस्ति। ततोऽविनाभाव एव हेतोः प्रधानं लक्षणमभ्युपगन्तव्यम्, सति तस्मिन्नसत्यपि त्रैलक्षण्ये हेतोर्गमकत्वदर्शनात्। न तु त्रैरूप्यं हेतुलक्षणम् अव्यापकत्वात्[16]। तथा च सर्वं क्षणिकं सत्त्वादित्यत्र मूर्द्धाभिषिक्ते साधने सौगतैः सपक्षेऽसतोऽपि हेतोः सत्त्वस्य गमकत्वमिष्यत एव। तदुक्तम्—

"अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम्?।
नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्?॥" इति।

---

१ सपक्षे दर्शनमन्वयः। २ मीमांसकं प्र.ा जैनो वक्ति। ३ सर्वज्ञस्य सर्वस्य सपक्षत्वात्। ४ अनित्यो घटः कृतकत्वात् शब्दवत्। कृतकत्वं शब्देऽस्ति नाकाशादौ। ५ यथा प्रयत्नानन्तरीयकः शब्दो अनित्यत्वात् घटवत्। ६ सपक्षे त्वस्ति एव। ७ यथा असर्वज्ञोऽयं वक्तृत्वात्। ८ अनैकान्तिकस्य। ९ पूर्वस्मिन्ननुमाने। १० पक्षधर्मत्वसपक्षसत्त्वलक्षणं रूपद्वयं। ११ विपक्षान्नियमवत्या व्यावृत्तेरभावे। १२ विपक्षान्नियमवत्या व्यावृत्तेः। १३ शून्याद्वैतवादिनः। १४ तन्मते प्रमाणलक्षणः पक्षोऽपि नास्ति कुतः पक्षधर्मता?। १५ –०पपत्तेः-मु–पा०। १६ स श्यामो मैत्रातनयत्वादित्यादौ।

§ ३४. एतेन पञ्चलक्षणकत्वमपि नैयायिकोक्तं प्रत्युक्तम्, तस्याप्यविनाभावप्रपञ्चत्वात् । तथाहि-त्रैरूप्यं पूर्वोक्तम्, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति पञ्च रूपाणि । तत्र प्रत्यक्षागमबाधितकर्म[1]निर्देशा[2]नन्तरप्रयुक्तत्वं बाधितविषयत्वं यथाऽनुष्णस्तेजोवयवी कृतकत्वात् घटवत् । ब्राह्मणेन सुरा पेया [द्रव]द्रव्य[3]त्वात् क्षीरवत् इति । तन्निषेधादबाधितविषयत्वम् । प्रतिपक्षहेतुबाधितत्वं सत्प्रतिपक्षत्वं यथाऽनित्यः शब्दो नित्यधर्मानुपलब्धेः । अत्र प्रतिपक्षहेतुः-नित्यः शब्दोऽनित्यधर्मानुपलब्धेरिति । तन्निषेधादसत्प्रतिपक्षत्वम् । तत्र बाधितविषयस्य[4] सत्प्रतिपक्षस्य चाविनाभावाभावादविनाभावेनैव रूपद्वयमपि सङ्गृहीतम् । यदाह[5]-"**बाधाविनाभावयोर्विरोधात्**" [हेतु०परि० ४] इति । अपि च, स्वलक्षणलक्षितपक्षविषयत्वाभावात् तद्दोषे[6]णैव दोषद्वयमिदं चरितार्थं किं पुनर्वचनेन ? । तत् स्थितमेतत् साध्याविनाभावैकलक्षणादिति ॥ ९ ॥

§ ३५. तत्राविनाभावं लक्षयति-

## सहक्रमभाविनोः सहक्रमभावनियमोऽविनाभावः ॥१०॥

§ ३६. 'सहभाविनोः'एकसामग्र्यधीनयोः फलादिगतयो रूपरसयोः व्याप्य[7]व्यापकयोश्च शिंशपात्ववृक्षत्वयोः, 'क्रमभाविनोः' कृत्तिकोदयशकटोदययोः, कार्यकारणयोश्च धूमधूमध्वजयोर्यथासङ्ख्यं यः 'सहक्रमभावनियमः'-सहभाविनोः सहभावनियमः क्रमभाविनोः क्रमभावनियमः, साध्यसाधनयोरिति प्रकरणाल्लभ्यते सः 'अविनाभावः' ॥१०॥

§ ३७. अथैवंविधोऽविनाभावो निश्चितः[8] साध्यप्रतिपत्त्यङ्गमित्युक्तम् । तन्निश्चयश्च कुतः प्रमाणात् ? । न तावत् प्रत्यक्षात्, तस्यैन्द्रियकस्य सन्निहितविषयविनियमितव्यापारत्वात् । मनस्तु यद्यपि सर्वविषयं तथा[9]पीन्द्रियगृहीतार्थगोचरत्वेनैव तस्य प्रवृत्तिः । अन्यथान्ध-बधिराद्य[10]भावप्रसङ्गः । सर्वविषयता तु सकलेन्द्रियगोचरार्थविषयत्वेनैवोच्यते न स्वातन्त्र्येण । योगिप्रत्यक्षेण त्वविनाभावग्रहणेऽ[11]नुमेयार्थप्रतिप[12]त्तिरेव ततोऽस्तु, किं तपस्विनाऽनुमानेन ? । अनुमानात्त्वविनाभावनिश्चयेऽ[13]नवस्थेतरेतराश्रयदोषप्रसङ्ग उक्त एव । न च प्रमाणान्तरमेवंविधविषयग्रहणप्रवणमस्तीत्याह-

## ऊहात् तन्निश्चयः ॥ ११ ॥

§ ३८. 'ऊहात्'तर्कादुक्तलक्षणात्तस्याविनाभावस्य 'निश्चयः' ॥ ११ ॥

§ ३९. लक्षितं परीक्षितं च साधनम् । इदानीं तत् विभजति-

---

१ साध्यमनुमेयमिति यावत् । २-०तधर्म०-डे० । ३ तात्पर्य० पृ० ३४०. । ४ -०स्य तत्प्र०-डे० । ५ यदाहुः-ता० । ६ पक्षदोषावेवैतौ । ७ साध्यसाधनयोः । ८ स्वनिश्चित इत्यनेन निश्चितः सन् । ९ प्रत्यक्षग्राह्यबाह्यार्थापेक्षया सुखादींश्च एवमेव गृह्णाति । १० मनसैव सर्वेन्द्रियार्थग्रहणात् । ११ अग्न्यादि । १२ -०पत्तिरपि ततो०-डे० । १३ अनुमानतो ह्यविनाभावनिश्चये तस्याप्यनुमानस्याविनाभावनिश्चये कमनुमानान्तरं चिन्त्यम्(?) । ..स्यापि अन्यदित्याद्यनवस्था । इतरेतराश्रयस्तु अनुमानादविनाभावनिश्चयो अविनाभावे च निश्चिते अनुमानोत्थानमिति ।

## स्वभावः कारणं कार्यमेकार्थसमवायि विरोधि चेति पञ्चधा साधनम् ॥ १२ ॥

§ ४०. स्वभावादीनि चत्वारि विधेः साधनानि, विरोधि तु निषेधस्येति पञ्चविधम् 'साधनम्'। 'स्वभावः' यथा शब्दानित्यत्वे साध्ये कृतकत्वं श्रावणत्वं वा।

§ ४१. ननु श्रावणत्वस्यासाधारणत्वात् कथं व्याप्तिसिद्धिः ?। विपर्यये[1] बाधकप्रमाणबलात् सत्त्वस्येवेति ब्रूमः। न चैवं सत्त्वमेव[2] हेतुः तद्विशेषस्योत्पत्तिमत्त्व-कृतकत्व-प्रयत्नानन्तरीयकत्व-प्रत्ययभेदभेदित्वादेरहेतुत्वापत्तेः[3]। किंच, किमिदमसाधारणत्वं नाम ?। यदि पक्ष एव वर्तमानत्वम्; तत् सर्वस्मिन् क्षणिके साध्ये सत्त्वस्यापि समानम्। साध्यधर्मवतः पक्षस्यापि सपक्षता चेत्; इह कः प्रद्वेषः ?। पक्षादन्यस्यैव सपक्षत्वे लोहलेख्यं वज्रं पार्थिवत्वात् काष्ठवदित्यत्र पार्थिवत्वमपि लोहलेख्यतां वज्रे गमयेत्। अन्यथानुपपत्तेरभावान्नेति चेत्; इदमेव तर्हि हेतुलक्षणमस्तु। अपक्षधर्मस्यापि साधनत्वापत्तिरिति चेत्; अस्तु यद्यविनाभावोऽस्ति, शकटोदये[4] कृत्तिकोदयस्य, सर्वज्ञसद्भावे संवादिन उपदेशस्य[5] गमकत्वदर्शनात्। काकस्य कार्ष्ण्यं न प्रासादे धावल्यं विनानुपपद्यमानमित्यनेकान्तादगमकम्। तथा, घटे चाक्षुषत्वं[6] शब्देऽनित्यतां विनाप्युपपद्यमानमिति। तन्न श्रावणत्वादिरसाधारणोऽप्यनित्यतां व्यभिचरति। ननु कृतकत्वाच्छब्दस्यानित्यत्वे साध्ये पर्यायवद् द्रव्येऽप्यनित्यता प्राप्नोति। नैवम्, पर्यायाणामेवानित्यतायाः साध्यत्वात्, अनुक्तमपीच्छाविषयीकृतं साध्यं भवतीति किं स्म[7] प्रस्मरति भवान् ?। ननु कृतकत्वानित्यत्वयोस्तादात्म्ये साधनवत् साध्यस्य सिद्धत्वम्, साध्यवच्च साधनस्य साध्यत्वं प्रसजति। सत्यमेतत्, किं तु मोहनिवर्तनार्थः प्रयोगः। यदाह–

> "सादेरपि न सान्तत्वं व्यामोहाद्योऽधिगच्छति।
> साध्यसाधनतैकस्य तं प्रति स्यान्न दोषभाक्॥"

§ ४२. 'कारणं'[9] यथा बाष्पभावेन मशक[10]वर्तिरूपतया वा सन्दिह्य[11]माने धूमेऽग्निः, विशिष्टमेघो[12]न्नतिर्वा वृष्टौ[13]। [14]कथमयमाबालगोपालाविपालाङ्गनादिप्रसिद्धोऽपि नोपलब्धः सूक्ष्मदर्शिनापि न्यायवादिना ?। कारण[15]विशेषदर्शनाद्धि सर्वः कार्यार्थी प्रवर्तते। स तु विशेषो ज्ञातव्यो योऽव्यभिचारी। कारणत्वनिश्चयादेव प्रवृत्तिरिति चेत्; अस्त्वसौ

---

१ अनित्यत्वविपरीते नित्यत्वे अश्राव्यरूपः पूर्वं शब्दः पश्चात् कथं उच्चारणात् श्राव्यो जात इति बाधकप्रमाणं तस्मान्नित्यत्वेऽघटमानकं श्रावण[त्व]मनित्यत्वं व्यवस्थापयति। २ सत्त्वमर्थक्रियाकारित्वम्। तच्चानित्यपक्ष एव घटत इति श्रावणत्वमपि सत्त्वमायातम्। ३ –०तुत्वोपपत्ते.–ता०। ४ गम्ये(य)शकटोदयाभावे कृत्तिकोदयात्। ५ कश्चित् पुरुषः सर्वभावसाक्षात्कर्त्ताऽस्ति अविसंवादिज्योतिर्ज्ञानान्यथानुपपत्तेः। ६ शब्दोऽनित्यः चाक्षुषत्वादित्यस्मिन्ननुमाने शब्दानित्यतां विनाऽपि घटादौ चाक्षुषत्वमुपपद्यते इत्यन्यत्रोपपद्यमानं शब्दस्यानित्यतां न साधयति। ७ स्म विस्म०–डे०। ८ अनित्यत्वम्। ९ करणम्–मु–पा०। १० मशवर्ति०– डे०। ११ अयं धूमोऽग्नेः। १२ वृष्टिर्भाविनी विशिष्टमेघोन्नतेः। १३ गम्यायां वृष्टौ। १४ सूरिराह। १५ अविकलकारणम्।

लिङ्गविशेषनिश्चयः प्रत्यक्षकृतः[1], फले तु भाविनि नानुमानादन्यन्निबन्धनमुत्पश्यामः । क्वचिद् व्यभिचारात्[2] सर्वस्य हेतोरहेतुत्वे कार्यस्यापि तथा प्रसङ्गः । बाष्पादेरकार्यत्वान्नेति चेत्; अत्रापि यत् यतो न भवति न तत् तस्य कारणमित्यदोषः । यथैव हि किञ्चित् कारणमुद्दिश्य किञ्चित्[3]कार्यम्; तथैव किञ्चित् कार्यमुद्दिश्य किञ्चित् कारणम् । यद्वदेवाजनकं प्रति न कार्यत्वम्, तद्वदेवाजन्यं प्रति न कारणत्वमिति नानयोः कश्चिद्विशेषः । अपि च रसादेकसामग्र्यनुमानेन रूपानुमानमिच्छता न्यायवादिनेष्टमेव कारणस्य हेतुत्वम् । यदाह[4]—

"एकसामग्र्य[5]धीनस्य रूपादे रसतो गतिः ।
हेतु[6]धर्मानुमानेन धूमेन्धनविकारवत् ॥" [प्रमाणवा० १. १०] इति ।

§ ४३. न च वयमपि यस्य कस्यचित् कारणस्य हेतुत्वं ब्रूमः । अपि तु यस्य न मन्त्रादिना शक्तिप्रतिबन्धो न वा कारणान्तर[7]वैकल्यम् । तत्[8] कुतो विज्ञायत इति चेत्; अस्ति तावद्विगुणादितरस्य विशेषः । तत्परिज्ञानं तु प्रायः पांशुर[9]पादानामप्यस्ति । यदाहुः—

"गम्भीरगर्जितारम्भनिर्भिन्नगिरिगह्वराः ।
त्वङ्गत्तडिल्लतासङ्गपिशङ्गोत्तुङ्गविग्रहाः ॥" [न्यायम० पृ० १२९]
"रोलम्बगवलव्यालतमालमलिनत्विषः ।
वृष्टिं व्यभिचरन्तीह नैवंप्रायाः पयोमुचः ॥" [न्यायम० पृ० १२९] इति ।

§ ४४. 'कार्यम्' यथा वृष्टौ विशिष्टनदीपूरः, कृशानौ धूमः, चैतन्ये प्राणादिः[10] । पूरस्य वैशिष्ट्यं कथं[11] विज्ञायत इति चेत्; उक्तमत्र नैयायिकैः । यदाहुः[12]—

"आवर्तवर्तनाशालिविशालकलुषोदकः ।
कल्लोलविकटास्फालस्फुट[13]फेनच्छटाङ्कितः ॥
वहद्बहलशेवालफलशाद्वल[14]सङ्कुलः ।
नदीपूरविशेषोऽपि शक्यते[15] न न वेदितुम् ॥" [न्यायम० पृ० १३०]

इति धूमप्राणादीनामपि कार्यत्वनिश्चयो न दुष्करः । यदाहुः[16]—

"कार्यं धूमो हुतभुजः कार्य[17]धर्मानुवृत्तितः ।
स भवंस्तदभावेऽपि हेतुमत्तां विलङ्घयेत् ॥" [प्रमाणवा० १. ३५]

---

१ प्रत्यक्षतः –मु-पा० । २ नावश्यं कारणानि कार्यवन्ति । ३ कार्य गमकं । ४ यदाहुः –ता० । ५ यथा धूमादग्निर्ज्ञायते तथाग्निरिन्धन( ? )विकारकर्ता दाहकोऽपि ज्ञायते । अयं रसो विशिष्टसामग्रीवा( मा )न् वैशिष्ट्यस्यान्यथानुपपत्तेरिति कारणा( कार्या )द्विशिष्टसामग्रीज्ञानं तस्माच्च रूपादिजनकत्वज्ञानम् । ६ हेतुः कारणं तस्य धर्मो रूपादिजनकत्वं तस्यानुमानं तस्य लिङ्गात् परिच्छेदः । ७ सहकारिकारणम् । ८ साकल्यमप्रतिबद्धस्वभावश्च । ९ हलधरादीनामपि । १० प्राणादि पू०-ता० । ११ कथं ज्ञाय०-डे० । १२ यदाह –ता० । १३ –०स्फुटः फेन०–डे० । १४ शाड्वल –डे० । १५ शक्यते न निवे०–डे० । १६ यदाह –ता० । १७ कार्यधर्मः कारणे सति भवनम्, कारणाऽभावे वाऽभवनम् ।

§ ४५. कारणाभावेऽपि कार्यस्य भावे अहेतुत्व[1]मन्य[2]हेतुत्वं वा भवेत्। अहेतुत्वे सदा सत्त्वमसत्त्वं वा[3] भवेत्। अन्यहेतुत्वे दृष्टादन्यतोऽपि भवतो न दृष्टजन्यता अन्याभावेऽपि दृष्टाद्भवतो नान्यहेतुकत्वमित्यहेतुकतैव स्यात्। तत्र चोक्तम्–"यस्त्वन्यतोऽपि भवन्नुपलब्धो न तस्य धूमत्वं हेतुभेदात्। कारणं च वह्निर्धूमस्य इत्युक्तम्।"
5 अपि च–

"अग्निस्वभावः शक्रस्य मूर्द्धा यद्यग्निरेव सः।
अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत्॥" [प्रमाणवा० १. ३७] इति।

§ ४६. तथा चेतनां विनानुपपद्यमानः कार्यं प्राणादिरनुमापयति तां श्रावणत्वमिवानित्यताम्, विपर्यये बाधकवशात्सत्त्वस्येवास्यापि व्याप्तिसिद्धेरित्युक्तप्रायम्। तन्न
10 प्राणादिरसाधारणोऽपि चेतनां व्यभिचरति।

§ ४७. किंच, नान्वयो हेतो रूपं तदभावे हेत्वाभासाभावात्। विपक्ष एव सन् विरुद्धः, विपक्षे[5]ऽपि–अनैकान्तिकः, सर्वज्ञत्वे साध्ये वक्तृत्वस्यापि व्यतिरेकाभाव एव हेत्वाभासत्वे निमित्तम्, नान्वयसन्देह इति न्यायवादिनापि व्यतिरेकाभावादेव हेत्वाभासावुक्तौ। असाधारणोऽपि यदि साध्याभावेऽसन्निति निश्चीयेत तदा प्रकारान्तरा-
15 भावात्साध्यमुपस्थापयन्नानैकान्तिकः स्यात्। अपि च यद्यन्वयो रूपं स्यात् तदा यथा विपक्षैकदेशवृत्तेः कथञ्चिद्व्यतिरेकादगमकत्वम्, एवं सपक्षैकदेशवृत्तेरपि स्यात् कथञ्चिदनन्वयात्। यदाह–

"रूपं यद्यन्वयो हेतोर्व्यतिरेकवदिष्यते।
स सपक्षो[6]भयो न स्यादसपक्षोभयो यथा॥"

20 सपक्ष एव सत्त्वमन्वयो न सपक्षे सत्त्वमेवेति चेत्; अस्तु, स तु व्यतिरेक एवेत्यस्मन्मतमेवाङ्गीकृतं स्यात्। वयमपि हि प्रत्यपीपदाम अन्यथानुपपत्त्येकलक्षणो हेतुरिति।

§ ४८. तथा, एकस्मिन्नर्थे दृष्टेऽदृष्टे वा समवाय्या[7]श्रितं साधनं साध्येन। तच्चैका[8]र्थसमवायित्वम् एकफलादिगतयो[9] रूपरसयोः, शकटोदय-कृत्तिकोदययोः, चन्द्रोदय-समुद्रवृद्ध्योः, वृष्टि-साण्डपिपीलिकाक्षोभयोः, नागवल्लीदाह-पत्रकोथयोः। तत्र 'एकार्थसमवायी'
25 रसो रूपस्य, रूपं वा रसस्य; नहि समानकालभाविनोः कार्यकारणभावः सम्भवति।

§ ४९. ननु समानका[10]लकार्यजनकं कारणमनुमास्यते इति चेत्; न तर्हि कार्यमनुमितं स्यात्। कारणानुमाने सामर्थ्यात् कार्यमनुमितमेव, जन्याभावे जनकत्वाभावा-

---

१ अहेतुकत्वम्। २ अग्नेरन्यो हेतुरस्य। ३ वा अन्य –डे०। वा भावयेत् अन्य० –मु-पा०। ४ वल्मीकस्य। ५ न केवलं सपक्षे किन्तु विपक्षेऽपि। ६ सपक्षे उभयं सत्त्वमसत्त्वं वा यस्य। ७ समवायाश्रितम्–ता०। ८ इदं फलं विशिष्टरूपवत् विशिष्टरसवत्त्वात्। इदं नभःखण्डं भाविशकटोदयं कृत्तिकोदयवत्त्वात्। अयं कालः समुद्रवृद्धिमान् चन्द्रोदयवत्त्वात्। एवम् अग्रेऽपि कालो धर्मी। ९ –०गतरूप०–डे०। १० कार्यरूपाद्रूपकारणं ज्ञायते। तच्च कीदृशम्?। समानकालं यत्कार्यं रसलक्षणं तज्जनकमनुमीयते।

दिति चेत्; हन्तैवं कारणं कार्यस्यानुमापकमित्यनिष्टमापद्येत। शकटोदयकृत्तिकोदया-[1] दीनां तु यथाऽविनाभावं साध्यसाधनभावः। यदाह–

**"एकार्थसमवायस्तु यथा येषां तथैव ते।**
**गमका गमकस्तन्न शकटः कृत्तिकोदितेः॥"**

एवमन्येष्वपि साधनेषु वाच्यम्। ननु कृतकत्वानित्यत्वयोरेकार्थसमवायः कस्मान्ने- 5
ष्यते ?; न, तयोरेकत्वात्। यदाह–

**"आद्यन्तापेक्षिणी सत्ता कृतकत्वमनित्यता।**
**एकैव हेतुः साध्यं च द्वयं नैकाश्रयं ततः॥"** इति।

§ ५०. स्वभावादीनां चतुर्णां साधनानां विधिसाधनता, निषेधसाधनत्वं तु विरोधिनः। स हि स्वसन्निधानेनेतरस्य प्रतिषेधं साधयति अन्यथा विरोधासिद्धेः। 10

§ ५१. 'च'शब्दो यत एते स्वभावकारणकार्यव्यापका[2] अन्यथानुपपन्नाः स्वसाध्य-मुपस्थापयन्ति तत[3] एव तदभावे स्वयं न भवन्ति, तेषामनुपलब्धिरप्यभावसाधनीत्याह। तत्र स्वभावानुपलब्धिर्यथा नात्र घटः, द्रष्टुं योग्यस्यानुपलब्धेः। कारणानुपलब्धिर्यथा नात्र धूमोऽग्न्यभावात्। कार्यानुपलब्धिर्यथा नात्राप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति धूमा[4]भावात्। व्यापकानुपलब्धिर्यथा नात्र शिंशपा वृक्षाभावात्। 15

§ ५२. विरोधि तु प्रतिषेध्यस्य तत्कार्यकारणव्यापकानां च विरुद्धं विरुद्ध-कार्यं[5] च। यथा न शीतस्पर्शः, नाप्रतिबद्धसामर्थ्यानि शीतकारणानि, न रोमहर्षविशेषाः, न तुषारस्पर्शः, अग्नेर्धूमाद्वेति प्रयोगनानात्वमिति॥ १२॥

§ ५३. साधनं लक्षयित्वा विभज्य च साध्यस्य लक्षणमाह–

## सिषाधयिषितमसिद्धमबाध्यं साध्यं पक्षः॥१३॥ 20

§ ५४. साधयितुमिष्टं 'सिषाधयिषितम्'। अनेन साधयितुमनिष्टस्य साध्यत्वव्यव-च्छेदः, यथा वैशेषिकस्य नित्यः शब्द इति। शास्त्रोक्तत्वाद्वैशेषिकेणाभ्युपगतस्याप्याका-शगुणत्वादेर्न साध्यत्वम्, तदा साधयितुमनिष्टत्वात्। इष्टः पुनरनुक्तोऽपि पक्षो भवति, यथा परार्थाश्चक्षुरादयः सङ्घातत्वाच्छयनाशनाद्यङ्गवदित्यत्र परार्था[6] इत्यात्मार्थाः। बुद्धि-मत्कारणपूर्वकं[7] क्षित्यादि कार्यत्वादित्यत्राऽशरीरसर्वज्ञपूर्वकत्वमिति। 25

§ ५५. 'असिद्धम्'इत्यनेनानध्यवसाय-संशय-विपर्ययविषयस्य वस्तुनः साध्यत्वम्, न सिद्धस्य[8] यथा श्रावणः शब्द इति। **"नानुपलब्धे न निर्णीते न्यायः प्रवर्तते"** [न्यायभा० १.१.१] इति हि सर्वपार्षदम्।

§ ५६. 'अबाध्यम्' इत्यनेन प्रत्यक्षादिबाधितस्य साध्यत्वं मा भूदित्याह। एतत् साध्यस्य लक्षणम्। 'पक्षः' इति साध्यस्यैव नामान्तरमेतत्॥१३॥ 30

---

१ शकटोदये प्रत्यक्षे सति कृत्तिकोदयस्यापि प्रत्यक्षत्वात् नानुमानतस्तदवगमः। २ एकार्थसमवायिनो व्यापका इति। ३ अन्यथानुपपन्नत्वादेव। ४ धूमाभावाद्वा व्या०–ता०। ५ कार्यं यथा –डे०। ६ परार्था बुद्धि० –डे०। ७ –०पूर्वं क्षि० –डे०। ८ इत्याह।

§ ५७. अबाध्यग्रहणव्यवच्छेद्यां बाधां दर्शयति–

**प्रत्यक्षानुमानागमलोकस्ववचनप्रतीतयो बाधाः ॥१४॥**

§ ५८. प्रत्यक्षादीनि [1]तद्विरुद्धार्थोपस्थापनेन बाधकत्वात् 'बाधाः'। तत्र प्रत्यक्षबाधा यथा अनुष्णो[2]ऽग्निः, न मधु[3] मधुरम्, न सुगन्धि विदलन्मालतीमुकुलम्[4], अचाक्षुषो[5] घटः, अश्रावणः शब्दः, नास्ति बहिरर्थ[6] इत्यादि। अनुमानबाधा यथा सरोम[7] हस्ततलम्, नित्यः शब्द इति वा। अत्रानुपलम्भेन कृतकत्वेन चानुमानबाधा। आगमबाधा यथा प्रेत्याऽसुखप्रदो धर्म इति। परलोके सुखप्रदत्वं धर्मस्य सर्वागमसिद्धम्। लोकबाधा यथा शुचि नरशिरःकपालमिति। लोके हि नरशिरःकपालादीनामशुचित्वं सुप्रसिद्धम्। स्ववचनबाधा यथा माता मे वन्ध्येति[8]। प्रतीतिबाधा यथा अचन्द्रः[9] शशीति। अत्र शशिनश्चन्द्रशब्दवाच्यत्वं प्रतीतिसिद्धमिति प्रतीतिबाधा ॥१४॥

§ ५९. अत्र साध्यं धर्मः, धर्मधर्मिसमुदायो वेति संशयव्यवच्छेदायाह–

**साध्यं साध्यधर्मविशिष्टो धर्मी, क्वचित्तु धर्मः ॥१५॥**

§ ६०. 'साध्यम्' साध्यशब्दवाच्यं पक्षशब्दाभिधेयमित्यर्थः। किमित्याह 'साध्यधर्मेण' अनित्यत्वादिना 'विशिष्टो धर्मी' शब्दादिः। एतत् प्रयोगकालापेक्षं[10] साध्यशब्दवाच्यत्वम्। 'क्वचित्तु' व्याप्तिग्रहणकाले 'धर्मः' साध्यशब्देनोच्यते, अन्यथा व्याप्तेरघटनात्। नहि धूमदर्शनात् सर्वत्र पर्वतोऽग्निमानिति व्याप्तिः शक्या कर्तुं प्रमाणविरोधादिति॥१५॥

धर्मिस्वरूपनिरूपणायाह–

**धर्मी प्रमाणसिद्धः ॥१६॥**

§ ६१. 'प्रमाणैः' प्रत्यक्षादिभिः प्रसिद्धो 'धर्मी' भवति यथाग्निमानयं देश इति। अत्र हि देशः प्रत्यक्षेण सिद्धः। एतेन–"**सर्व एवानुमानानुमेयव्यवहारो**[11][12][13] **बुद्ध्यारूढेन धर्मधर्मिन्यायेन, न बहिः सदसत्त्वमपेक्षते**" इति सौगतं मतं प्रतिक्षिपति। नहीयं विकल्पबुद्धिरन्तर्बहिर्वाऽनासादितालम्बना धर्मिणं व्यवस्थापयति, तद्वास्तवत्वे[14] तदाधार[15]स्साध्यसाधनयोरपि वास्तवत्वानुपपत्तेः तद्बुद्धेः[16] पारम्पर्येणापि[17] वस्तुव्यवस्थापकत्वायोगात्। ततो विकल्पेनान्येन[18] वा व्यवस्थापितः पर्वतादिर्विषयभावं[19] भजन्नेव धर्मितां प्रतिपद्यते। तथा च सति प्रमाणसिद्धस्य धर्मिता युक्तैव ॥१६॥

---

१ साध्य०। २ कृतकत्वादिति हेतुः। ३ विचित्ररसप्रभवत्वात् अनेकरससंयोगवत्। ४ लतैकदेशत्वात् पत्रवत्। ५ रूपादत्यन्तव्यतिरिक्तत्वात् वायुवत्। ६ यथावस्थेन रूपेणाप्रतिभासमानत्वात् यदस्ति तद्यथावस्थितरूपेणाप्रतिभासमानमपि नास्ति यथा ज्ञानम्। ७ शरीरावयवत्वात् बाहुवत्। ८ वन्ध्यास्त्रीसमानाङ्गत्वात्। ९ चन्द्रशब्दवाच्यः शशी न भवति आकाशोदितत्वात् सूर्यवत्। १० –०लापेक्ष्यं –ता०। ११ साधनम्। १२ साध्यम्। १३ –०मेयस्य व्य०-ता०। १४ धर्मिणः। १५ स धर्मी आधारो ययोः। १६ तद्बुद्धेर्विकल्पज्ञानस्य। १७ निर्विकल्पकं प्राप्तविषयम्, तद्विकल्पोऽपि प्राप्तविषय इति। एवंलक्षणपारम्पर्येणापि। १८ निर्विकल्पेन। १९ विकल्पस्य विषयभावम्।

§ ६३. अपवादमाह–

**बुद्धिसिद्धोऽपि ॥१७॥**

§ ६४. नैकान्तेन प्रमाणसिद्ध एव धर्मी किंतु विकल्पबुद्धिप्रसिद्धोऽपि धर्मी[1] भवति। 'अपि' शब्देन प्रमाण-बुद्धिभ्यामुभाभ्यामपि सिद्धो धर्मी भवतीति दर्शयति। तत्र बुद्धिसिद्धे धर्मिणि साध्यधर्मः सत्त्वमसत्त्वं च प्रमाणबलेन साध्यते यथा अस्ति[2] सर्वज्ञः, नास्ति षष्ठं भूतमिति[3]। 5

§ ६५. ननु धर्मिणि साक्षादसति भावाभावोभयधर्माणामसिद्धविरुद्धानैकान्तिकत्वेनानुमानविषयत्वायोगात् कथं सत्त्वासत्त्वयोः साध्यत्वम् ?। तदाह–

"नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः।
विरुद्धो धर्मोऽभावस्य सा सत्ता साध्यते कथम् ? ॥" [ प्रमाणवा० १.१९२-३] इति। 10

§ ६६. नैवम्, मानसप्रत्यक्षे भावरूपस्यैव धर्मिणः प्रतिपन्नत्वात्। न च तत्सिद्धौ तत्सत्त्वस्यापि प्रतिपन्नत्वाद् व्यर्थमनुमानम्, तदभ्युपेतमपि वैयात्याद्यो न प्रतिपद्यते तं प्रत्यनुमानस्य साफल्यात्। न च मानसज्ञानात् खरविषाणादेरपि सद्भावसम्भावनातोऽतिप्रसङ्गः, तज्ज्ञानस्य बाधकप्रत्ययविप्लावितसत्ताकवस्तुविषयतया मानसप्रत्यक्षाभासत्वात्। कथं तर्हि षष्ठभूतादेर्धर्मित्वमिति चेत्; धर्मिप्रयोगकाले बाधकप्रत्ययानुदयात्सत्त्वसम्भावनोपपत्तेः। न च सर्वज्ञादौ साधकप्रमाणासत्त्वेन सत्त्वसंशीतिः, सुनिश्चिताऽसम्भवद्बाधकप्रमाणत्वेन सुखादाविव सत्त्वनिश्चयात्तत्र संशयायोगात्। 15

§ ६७. उभयसिद्धो धर्मी यथा अनित्यः शब्द इति। नहि प्रत्यक्षेणार्वाग्दर्शिभिरनियतदिग्देशकालावच्छिन्नाः सर्वे शब्दाः शक्या निश्चेतुमिति शब्दस्य प्रमाणबुद्ध्युभयसिद्धता तेनानित्यत्वादिर्धर्मः प्रसाध्यत इति ॥ १७ ॥ 20

§ ६८. ननु दृष्टान्तोऽप्यनुमानाङ्गतया प्रतीतः। तत् कथं साध्यसाधने एवानुमानाङ्गमुक्ते न दृष्टान्तः ?, इत्याह–

**न दृष्टान्तोऽनुमानाङ्गम् ॥ १८ ॥**

§ ६९. 'दृष्टान्तः' वक्ष्यमाणलक्षणो नानुमानस्य 'अङ्गम्' कारणम् ॥ १८ ॥ 25

§ ७०. कुत इत्याह–

**साधनमात्रात् तत्सिद्धेः ॥ १९ ॥**

§ ७१. दृष्टान्तरहितात्साध्यान्यथानुपपत्तिलक्षणात् 'साधनात्' अनुमानस्य साध्यप्रतिपत्तिलक्षणस्य भावान्न दृष्टान्तोऽनुमानाङ्गमिति।

---

१ धर्मी भवति किं–डे०। २ अविसंवादिज्योतिर्ज्ञानान्यथानुपपत्तेः। ३ उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः। ४ हेतूनाम्। ५ धर्मिणि। ६ हेतुरुभयधर्मः। ७ विरुद्धधर्मो –मु०। विरुद्धोऽधर्मो –डे०। ८ सत्ता सार्वज्ञी। ९ नैवम्––डे०। १० धर्मिणः। ११ सत्त्वम्। १२ विषयाणाम्। १३ सन्देहः। १४ सुखादिवच्च सत्त्व० मु–पा०। १५ प्रमातृभिः। १६ –०रनियतदिग्दर्शिभिर्नियतदिग्देश –डे०। १७ किं सिद्धम् ?। १८ प्रसाध्य इति–ता०। १९ अष्टादशमेकोनविंशतितमं च सूत्रद्वयं ता–मू० प्रतौ भेदकचिह्नं विना सहैव लिखितं दृश्यते। अत्रास्माकमपि द्वयोरेकत्वं सुचारु भाति–सम्पा०।

§ ७२. स[1] हि साध्यप्रतिपत्तौ वा, अविनाभावग्रहणे वा, व्याप्तिस्मरणे वोपयुज्येत ? । न तावत् प्रथमः पक्षः, यथोक्तादेव हेतोः साध्यप्रतिपत्तेरुपपत्तेः । नापि द्वितीयः, विपक्षे[2] बाधकादेवाविनाभावग्रहणात् । किंच, व्यक्तिरूपो दृष्टान्तः । स कथं साकल्येन व्याप्तिं गमयेत् ? । व्यक्त्यन्तरेषु व्याप्त्यर्थं दृष्टान्तान्तरं मृग्यम् । तस्यापि व्यक्तिरूपत्वेन साकल्येन व्याप्तेरवधारयितुमशक्यत्वादपरापरदृष्टान्तापेक्षायामनवस्था स्यात् । नापि तृतीयः, गृहीतसम्बन्धस्य[3] साधनदर्शनादेव व्याप्तिस्मृतेः । अगृहीतसम्बन्धस्य[4] दृष्टान्ते[5]ऽप्यस्मरणात् उपलब्धि[6]पूर्वकत्वात् स्मरणस्येति ॥ १९ ॥

§ ७३. दृष्टान्तस्य लक्षणमाह–

**स व्याप्तिदर्शनभूमिः ॥२०॥**

§ ७४. 'स' इति दृष्टान्तो लक्ष्यं 'व्याप्तिः'लक्षितरूपा 'दर्शनम्' परस्मै प्रतिपादनं तस्य 'भूमिः'आश्रय इति लक्षणम् ।

§ ७५ ननु यदि दृष्टान्तोऽनुमानाङ्गं न भवति तर्हि किमर्थं लक्ष्यते ? । उच्यते । परार्थानुमाने बोध्या[7]नुरोधादापवादिकस्योदाहरणस्यानुज्ञास्यमानत्वात्[8] । तस्य[9] च दृष्टान्ताभिधानरूपत्वादुपपन्नं दृष्टान्तस्य लक्षणम् । प्रमातुरपि कस्यचित् दृष्टान्तदृष्टबहिर्व्याप्तिबलेनान्तर्व्याप्तिप्रतिपत्तिर्भवतीति स्वार्थानुमानपर्वण्य[10]पि दृष्टान्तलक्षणं नानुपपन्नम् ॥ २० ॥

§ ७६. तद्विभागमाह–

**स[11] साधर्म्यवैधर्म्याभ्यां द्वेधा ॥२१॥**

§ ७७. स दृष्टान्तः 'साधर्म्येण' अन्वयेन 'वैधर्म्येण' च व्यतिरेकेण भवतीति द्विप्रकारः ॥२१॥

§ ७८. साधर्म्यदृष्टान्तं विभजते–

**साधनधर्मप्रयुक्तसाध्यधर्मयोगी साधर्म्यदृष्टान्तः ॥२२॥**

§ ७९. साधन[12]धर्मेण प्रयुक्तो[13] न तु काकतालीयो यः साध्य[14]धर्मस्तद्वान् 'साधर्म्यदृष्टान्तः' । यथा कृतकत्वेनानित्ये शब्दे साध्ये घटादिः ॥२२॥

§ ८०. वैधर्म्यदृष्टान्तं व्याचष्टे–

**साध्यधर्मनिवृत्तिप्रयुक्तसाधनधर्मनिवृत्तियोगी वैधर्म्यदृष्टान्तः[15] ॥२३॥**

§ ८१. साध्यधर्मनिवृत्त्या प्रयुक्ता न यथाकथञ्चित् या साधनधर्मनिवृत्तिः तद्वान् 'वैधर्म्यदृष्टान्तः' । यथा कृतकत्वेनानित्ये शब्दे साध्ये आकाशादिरिति ॥२३॥

इत्याचार्यश्रीहेमचन्द्रविरचितायाः प्रमाणमीमांसायास्तद्वृत्तेश्च प्रथमस्याध्यायस्य द्वितीयमाह्निकम् ॥

---

१ दृष्टान्तः । २ वर्तमानस्य हेतोः । ३ पुंसः । ४ पुंसः । ५ सति । ६ दर्शनम् । ७ शिष्य० । ८ अनुमंस्यमानत्वात् । ९ उदाहरणस्य । १० प्रस्तावे । ११ ता–मू०–सं–मू०–प्रत्योः सवृत्तिकताडपत्रीयसूत्रे च 'स' नास्ति । १२ साधनमेव धर्मः । १३ कृतः । १४ साध्यो धर्म०–डे० । १५ इत्याचार्यश्रीहेमचन्द्रविरचितायां प्रमाणमीमांसायां प्रथमस्याध्यायस्य द्वितीयमाह्निकम् । प्रथमोऽध्यायः समाप्तः–ता–मू० । इत्या···द्वितीयाह्निकम् । प्रथमाध्यायः—सं–मू० ।

वि[1]धाद्वाक्यात् पक्षसिद्धौ पराजयायोगात्। कथं चैवं प्रमाणसंप्लवोऽभ्यु[3]पगम्यते ?। अभ्युपगमे वाऽधिकान्निग्रहाय जायेत। प्रतिपत्तिदार्ढ्यसंवादसिद्धिप्रयोजनसद्भावान्न निग्रहः; इत्यन्यत्रापि समानम्, हेतुनोदाहरणेन चै(वै)केन प्रसाधितेऽप्यर्थे द्वितीयस्य हेतोरुदाहरणस्य वा नानर्थक्यम्, तत्प्रयोजनसद्भावात्। न चैवमनवस्था, कस्यचित् क्वचिन्निराकाङ्क्षतोपपत्तेः
5 प्रमाणान्तरवत्। कथं चास्य कृतकत्वादौ स्वार्थिककप्रत्ययस्य वचनम्, यत्कृतकं तदनित्यमिति व्याप्तौ यत्तद्व[4]चनम्, वृ[5]त्तिपदप्रयोगादेव चार्थप्रतिपत्तौ वाक्यप्रयोगः अधिकत्वान्निग्रहस्थानं न स्यात् ?। तथाविधस्याप्यस्य प्रतिपत्तिविशेषोपायत्वात्तन्नेति चेत्; कथमनेकस्य हेतोरुदाहरणस्य वा तदुपायभूतस्य वचनं निग्रहाधिकरणम् ?। निरर्थकस्य तु वचनं निरर्थकत्वादेव निग्रहस्थानं नाधिकत्वादिति १२।

10 § ९३. शब्दार्थयोः पुनर्वचनं पुनरुक्तं नाम निग्रहस्थानं भवत्यन्यत्रानुवादात्। शब्दपुनरुक्तं नाम यत्र स एव शब्दः पुनरुच्चार्यते। यथा अनित्यः शब्दः अनित्यः शब्द इति। अर्थपुनरु[6]क्तं तु यत्र सोऽर्थः प्रथममन्येन शब्देनोक्तः पुनः पर्यायान्तरेणोच्यते। यथा अनित्यः शब्दो विनाशी ध्वनिरिति। अनुवादे तु पौनरु[7]क्त्यमदोषो यथा– "हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" [न्यायसू० १.१.३९] इति।
15 अत्रार्थपुनरुक्तमेवानुपपन्नं न शब्दपुनरुक्तम्, अर्थभेदेन शब्दसाम्येऽप्यस्या[8]सम्भवात् यथा–

"हसति हसति स्वामिन्युच्चैरुदत्यतिरोदिति,
कृतपरिकरं स्वेदोद्गारि प्रधावति धावति।
गुणसमुदितं दो[9]षापेतं प्रणिन्दति निन्दति,
धनलवपरिक्रीतं यन्त्रं प्रनृत्यति नृत्यति॥" –[वादन्यायः पृ० १११]

20 इत्यादि। ततः स्पष्टार्थवाचकैस्तैरेवान्यैर्वा शब्दैः सभ्याः प्रतिपादनीयाः। तदप्रतिपादकशब्दानां तु सकृत् पुनः पुनर्वाभिधानं निरर्थकं न तु पुनरुक्तमिति। यदपि अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तमुक्तं यथा असत्सु मेघेषु वृष्टिर्न भवतीत्युक्ते अर्थादापद्यते सत्सु भवतीति तत् कण्ठेन कथ्यमानं पुनरुक्तं भवति, अर्थगत्यर्थे हि शब्दप्रयोगे प्रतीतेऽर्थे किं तेनेति ?। एतदपि प्रतिपन्नार्थप्रतिपादकत्वेन वैयर्थ्यान्निग्रहस्थानं
25 नान्यथा। तथा चेदं निरर्थकान्न [10]विशिष्येतेति १३।

§ ९४. पर्षदा विदितस्य वादिना त्रिरभिहितस्यापि यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानं भवति, अप्रत्युच्चारयत्(न्) किमाश्रयं दूषणमभिदधतीति(०दधीतेति)। अत्रापि किं सर्वस्य वादिनोक्तस्याननुभाषणम् उत[11] यन्नान्तरीयिका साध्यसिद्धिस्तस्येति ?। तत्राद्यः पक्षोऽयुक्तः, परोक्तमशेषमप्रत्युच्चारयतोऽपि दूषणवचनाव्याघातात्। यथा सर्वम-
30 नित्यं सत्त्वादित्युक्ते–सत्त्वादित्ययं हेतुर्विरुद्ध इति हेतुमेवोच्चार्य विरुद्धतोद्भाव्यते–क्षण-

१ –' विधाद्वा वाक्या०–ता०। २ हेत्वन्तरयुक्तात्। ३ –०पगम्यते वाधिकान्नि० – डे०। ४ –०चनवृ० – डे०। ५ कृतकानित्यमिति वृत्तिपदम्। ६ – ०क्तं यत्र० – डे०। ७ – ०रुक्तम० डे०। ८ – ०स्य सम्भ० – डे०। ९ दोषोपेतम् – डे०। १० विशेष्ये० –डे०। ११ उत यत्नान्तरीयिका० – ता०। उत प्रयत्नानन्तरीयिका –डे०।

क्षयाद्येकान्ते सर्वथार्थक्रियाविरोधात् सत्त्वानुपपत्तेरिति च समर्थ्यते । तावता च परोक्त-हेतोर्दूषणात्किमन्योच्चारणेन ?। अतो यन्नान्तरीयिका साध्यसिद्धिस्तस्यैवाप्रत्युच्चारणमन-नुभाषणं प्रतिपत्तव्यम् । अथैवं दूषयितुमसमर्थः शास्त्रार्थपरिज्ञानविशेषविकलत्वात्; तदायमुत्तराप्रतिपत्तेरेव तिरस्क्रियते न पुनरननुभाषणादिति १४ ।

§ ९५. पर्षदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादिनो यदज्ञानं तदज्ञानं नाम निग्रहस्थानं भवति । अविदितोत्तरविषयो हि क्वोत्तरं ब्रूयात् ?। न चाननुभाषणमेवेदम्, ज्ञातेऽपि वस्तुन्यनुभाषणासामर्थ्यदर्शनात् । एतदप्यसाम्प्रतम्, प्रतिज्ञाहान्यादिनिग्रहस्था-नानां भेदाभावानुषङ्गात्, तत्राप्यज्ञानस्यैव सम्भवात् । तेषां तत्प्रभेदत्वे वा निग्रहस्थान-प्रतिनियमाभावप्रसङ्गः, परोक्तस्याऽर्धाऽज्ञानादिभेदेन निग्रहस्थानानेकत्वप्रसङ्गात् १५ ।

§ ९६. परपक्षे गृहीतेऽप्यनुभाषितेऽपि तस्मिन्नुत्तराप्रतिपत्तिरप्रतिभा नाम निग्रह-स्थानं भवति । एषाप्यज्ञानान्न भिद्यते १६ ।

§ ९७. "**कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः**" [न्यायसू० ५. २. १९] नाम निग्रहस्थानं भवति । सिषाधयिषितस्यार्थस्याशक्यसाधनतामवसाय कथां विच्छिनत्ति—'इदं मे करणीयं परिहीयते, पीनसेन कण्ठ उपरुद्धः' इत्याद्यभिधाय कथां विच्छिन्दन् विक्षेपेण पराजीयते । एतदप्यज्ञानतो नार्थान्तरमिति १७ ।

§ ९८. स्वपक्षे परापादितदोषमनुद्धृत्य तमेव परपक्षे प्रतीपमापादयतो मतानुज्ञा नाम निग्रहस्थानं भवति । चौरो भवान् पुरुषत्वात् प्रसिद्धचौरवदित्युक्ते—भवानपि चोरः पुरुषत्वादिति ब्रुवन्नात्मनः परापादितं चौरत्वदोषमभ्युपगतवान् भवतीति मतानुज्ञया निगृह्यते । इदमप्यज्ञानान्न भिद्यते । अनैकान्तिकता वात्र हेतोः; स ह्यात्मीयहेतोरात्मनैवा-नैकान्तिकतां दृष्ट्वा प्राह—भवत्पक्षेऽप्ययं दोषः समानस्त्वमपि पुरुषोऽसीत्यनैकान्तिकत्व-मेवोद्भावयतीति १८ ।

§ ९९. निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानं भवति । पर्य-नुयोज्यो नाम निग्रहोपपत्त्यावश्यं नोदनीयः 'इदं ते निग्रहस्थानमुपनतमतो निगृहीतो-ऽसि' इत्येवं वचनीयस्तमुपेक्ष्य न निगृह्णाति यः स पर्यनुयोज्योपेक्षणेन निगृह्यते । एतच्च 'कस्य निग्रहः' इत्यनुयुक्तया परिषदोद्भावनीयं न त्वसावात्मनो दोषं विवृणुयात् 'अहं निग्राह्यस्त्वयोपेक्षितः' इति । एतदप्यज्ञानान्न भिद्यते १९ ।

§ १००. "**अनिग्रहस्थाने निग्रहस्थानानुयोगो निरनुयोज्यानुयोगः**" [न्यायसू० ५. २. २२] नाम निग्रहस्थानं भवति । उपपन्नवादिनमप्रमादिनमनिग्रहार्हमपि 'निगृहीतोऽसि' इति यो ब्रूयात्स एवाभूतदोषोद्भावनान्निगृह्यते । एतदपि नाज्ञानाद्व्यति-रिच्यते २० ।

---

१ तावता परो० – डे० । २ भेदभा० – डे० । ३ –०नतो न भिद्यते । स्व० – मु–पा० । ४ – ०रा-त्मीयेनैव – डे० । ५ पुरुषो भवसी० – डे० । ६–०स्थानामियो० –मु–पा० ।

§ १०१ "**सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः**" [न्यायसू० ५. २. २३] नाम निग्रहस्थानं भवति। यः प्रथमं कञ्चित् सिद्धान्तमभ्युपगम्य कथामुपक्रमते। तत्र च सिषाधयिषितार्थसाधनाय परोपालम्भाय वा सिद्धान्तविरुद्धमभिधत्ते सोऽपसिद्धान्तेन निगृह्यते। एतदपि प्रतिवादिनः प्रतिपक्षसाधने सत्येव निग्रहस्थानं
5 नान्यथेति २१।

§ १०२ "**हेत्वाभासाश्च यथोक्ताः**" [न्यायसू० ५. २. २४] असिद्धविरुद्धादयो निग्रहस्थानम्। अत्रापि विरुद्धहेतूद्भावनेन प्रतिपक्षसिद्धेर्निग्रहाधिकरणत्वं युक्तम्, असिद्धाद्युद्भावने तु प्रतिवादिना प्रतिपक्षसाधने कृते तद्युक्तं नान्यथेति २२॥ ३४॥

§ १०३. तदेवमक्षपादोपदिष्टं पराजयाधिकरणं परीक्ष्य सौगतागमितं[1] तत् परीक्ष्यते–

10 **नाप्यसाधनाङ्गवचनादोषोद्भावने**[2][3] **॥ ३५ ॥**

§ १०४. स्वपक्षस्यासिद्धिरेव पराजयो 'न' 'असाधनाङ्गवचनम्' 'अदोषोद्भावनम्' च। यथाह धर्मकीर्त्तिः–

"**असाधनाङ्गवचनमदोषोद्भावनं द्वयोः।**
**निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते॥**" –[वादन्यायः का० १]

15 § १०५. अत्र हि स्वपक्षं साधयन् असाधयन् वा वादिप्रतिवादिनोरन्यतरोऽसाधनाङ्गवचनाददोषोद्भावनाद्वा परं निगृह्णाति ? । प्रथमपक्षे स्वपक्षसिद्ध्यैवास्य पराजयादन्योद्भावनं व्यर्थम्। द्वितीयपक्षे असाधनाङ्गवचनाद्युद्भावनेपि[4] न कस्यचिज्जयः, पक्षसिद्धेरुभयोरभावात्।

§ १०६. यच्चास्य व्याख्यानम्–साधनं सिद्धिस्तदङ्गं त्रिरूपं लिङ्गं तस्यावचनम्–
20 तूष्णीम्भावो यत्किञ्चिद्भाषणं वा, साधनस्य वा त्रिरूपलिङ्गस्याङ्गं समर्थनं विपक्षे बाधकप्रमाणोपदर्शनरूपं तस्यावचनं वादिनो निग्रहस्थानमिति–तत् पञ्चावयवप्रयोगवादिनोऽपि समानम्। शक्यं हि तेनाप्येवं वक्तुं सिद्ध्यङ्गस्य पञ्चावयवप्रयोगस्यावचनात् सौगतस्य वादिनो निग्रहः। ननु चास्य तदवचनेऽपि[5] न निग्रहः, प्रतिज्ञानिगमनयोः पक्षधर्मोपसंहारसामर्थ्येन[6] गम्यमानत्वात्, गम्यमानयोश्च वचने
25 पुनरुक्तत्वानुषङ्गात्, तत्प्रयोगेऽपि हेतुंप्रयोगमन्तरेण[7] साध्यार्थाप्रसिद्धेः; इत्यप्यसत्, पक्षधर्मोपसंहारस्याप्येवमवचनानुषङ्गात्[8]। अथ सामर्थ्याद्गम्यमानस्यापि यत् सत् तत् सर्वं क्षणिकं यथा घटः, संश्च शब्द इति पक्षधर्मोपसंहारस्य वचनं[9] हेतोरपक्षधर्मत्वेना-[10]

---

१– ० मितं परी० – ता०। २ नासाध० – ता–मू०। ३ इत्याचार्यश्रीहेमचन्द्रविरचितायां प्रमाणमीमांसायां द्वितीयस्याध्यायस्य कियन्ति सूत्राणि ॥ श्रीवामातनयाय नमः॥ शुभं भवतु लेखकपाठकाय सदा॥ छ॥ – सं-मू०। ४–०पि कस्य०–ता०। ५ –०पि निग्र०–डे०। ६ पक्षधर्मोपक्षधर्मोपसं०–डे० पक्षधर्मापक्षधर्मोपसं–मु०। ७ हेतुना प्रयो०– ता०। ८ –०प्येत्रं वच० – डे०। ९ वचनहे० –डे०। १० –०क्षधर्मत्वे त्वसि० – डे०।

सिद्धत्वव्यवच्छेदार्थम्; तर्हि साध्याधारसन्देहापनोदार्थं गम्यमानाया अपि प्रतिज्ञायाः, प्रतिज्ञाहेतूदाहरणोपनयानामेकार्थत्वप्रदर्शनार्थं[1] निगमनस्य वचनं किं न स्यात्? । नहि प्रतिज्ञादीनामेकार्थत्वोपदर्शनमन्तरेण सङ्गतत्वं घटते, भिन्नविषयप्रतिज्ञादिवत् । ननु प्रतिज्ञातः साध्यसिद्धौ हेत्वादिवचनमनर्थकमेव स्यात्, अन्यथा नास्याः साधनाङ्गतेति चेत्; तर्हि भवतोऽपि हेतुतः साध्यसिद्धौ दृष्टान्तोऽनर्थकः स्यात्, अन्यथा नास्य साधनाङ्गतेति समानम् । ननु साध्यसाधनयोर्व्याप्तिप्रदर्शनार्थत्वात् नानर्थको दृष्टान्तः, तत्र तदप्रदर्शने हेतोरगमकत्वात्; इत्यप्ययुक्तम्, सर्वानित्यत्वसाधने सत्त्वादेर्दृष्टान्तासम्भवतोऽगमकत्वानुषङ्गात् । विपक्षव्यावृत्त्या सत्त्वादेर्गमकत्वे वा सर्वत्रापि हेतौ तथैव गमकत्वप्रसङ्गात् दृष्टान्तोऽनर्थक एव स्यात् । विपक्षव्यावृत्त्या च हेतुं समर्थयन् कथं प्रतिज्ञां प्रतिक्षिपेत्? । तस्याश्चानभिधाने क्व हेतुः साध्यं वा वर्तते? । गम्यमाने प्रतिज्ञाविषय एवेति चेत्; तर्हि गम्यमानस्यैव हेतोरपि समर्थनं स्यान्न तूक्तस्य । अथ गम्यमानस्यापि हेतोर्मन्दमतिप्रतिपत्त्यर्थं वचनम्; तथा प्रतिज्ञावचने कोऽपरितोषः? ।

§ १०७. यच्चेदमसाधनाङ्गमित्यस्य व्याख्यानान्तरम्—साधर्म्येण हेतोर्वचने वैधर्म्यवचनम्, वैधर्म्येण च प्रयोगे साधर्म्यवचनं गम्यमानत्वात् पुनरुक्तमतो न साधनाङ्गम्; इत्यप्यसाम्प्रतम्, यतः सम्यक्साधनसामर्थ्येन स्वपक्षं साधयतो वादिनो निग्रहः स्यात्, असाधयतो वा? । प्रथमपक्षे न साध्यसिद्ध्यप्रतिबन्धिवचनाधिक्योपालम्भमात्रेणास्य निग्रहः, अविरोधात् । नन्वेवं नाटकादिघोषणतोऽप्यस्य निग्रहो न स्यात्; सत्यमेतत्, स्वसाध्यं प्रसाध्य नृत्यतोऽपि दोषाभावाल्लोकवत्, अन्यथा ताम्बूलभक्षणभ्रूक्षेप-खाट्कृत-हस्तास्फालनादिभ्योऽपि सत्यसाधनवादिनोऽपि निग्रहः स्यात् । अथ स्वपक्षमप्रसाधयतोऽस्य ततो निग्रहः; नन्वत्रापि किं प्रतिवादिना स्वपक्षे साधिते वादिनो वचनाधिक्योपालम्भो निग्रहो लक्ष्येत, असाधिते वा? । प्रथमपक्षे स्वपक्षसिद्ध्यैवास्य निग्रहाद्वचनाधिक्योद्भावनमनर्थकम्, तस्मिन् सत्यपि पक्षसिद्धिमन्तरेण जयायोगात । द्वितीयपक्षे तु युगपद्वादिप्रतिवादिनोः पराजयप्रसङ्गो जयप्रसङ्गो वा स्यात्, स्वपक्षसिद्धेरभावाविशेषात् ।

§ १०८. ननु न स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ जयपराजयौ, तयोर्ज्ञानाज्ञाननिबन्धनत्वात् । साधनवादिना हि साधुसाधनं ज्ञात्वा वक्तव्यम्, दूषणवादिना च दूषणम् । तत्र साधर्म्यवचनाद्वैधर्म्यवचनाद्वाऽर्थस्य प्रतिपत्तौ[2] तदुभयवचने वादिनः प्रतिवादिना सभायामसाधनाङ्गवचनस्योद्भावनात् साधुसाधनाज्ञानसिद्धेः पराजयः । प्रतिवादिनस्तु तद्दूषणज्ञाननिर्णयाज्जयः स्यात्; इत्यप्यविचारितरमणीयम्, यतः स प्रतिवादी सत्साधनवादिनः साधनाभासवादिनो वा वचनाधिक्यदोषमुद्भावयेत्? । तत्राद्यपक्षे वादिनः कथं साधुसाधनाज्ञानम्, तद्वचनेयत्ताज्ञानस्यैवाभावात्? । द्वितीयपक्षे तु न प्रतिवादिनो दूषणज्ञानमवतिष्ठते साधनाभासस्यानुद्भावनात् । तद्वचनाधिक्यदोषस्य[3] ज्ञानात् दूषणज्ञो-

१–०कार्थप्रतिप्रद० –मु । ०कार्थप्रतिज्ञाप्रद० – डे० । २ साधर्म्यवचनाद्वार्थस्य – डे० । ३–०तदव० –डे० ।

ऽसाविति चेत्; साधनाभासाज्ञानाददूषणज्ञोऽपीति नैकान्ततो[1] वादिनं जयेत्, तद्दोषोद्भावनलक्षणस्य पराजयस्यापि निवारयितुमशक्तेः। अथ वचनाधिक्यदोषोद्भावनादेव प्रतिवादिनो जयसिद्धौ साधनाभासोद्भावनमनर्थकम्; नन्वेवं साधनाभासानुद्भावनात्तस्य पराजयसिद्धौ वचनाधिक्योद्भावनं कथं जयाय प्रकल्पेत? । अथ वचनाधिक्यं 5 साधनाभासं[2] वोद्भावयतः प्रतिवादिनो जयः[3]; कथमेवं साधर्म्यवचने वैधर्म्यवचनं वैधर्म्यवचने वा साधर्म्यवचनं पराजयाय प्रभवेत्?। कथं चैवं वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहवैयर्थ्यं न स्यात्, क्वचिदेकत्रापि पक्षे साधनसामर्थ्यज्ञानाज्ञानयोः सम्भवात्? न खलु शब्दादौ नित्यत्वस्यानित्यत्वस्य वा परीक्षायामेकस्य साधनसामर्थ्ये ज्ञानमन्यस्य चाज्ञानं जयस्य पराजयस्य[4] वा निबन्धनं न भवति। युगपत्साधनासामर्थ्यज्ञाने च 10 वादिप्रतिवादिनोः कस्य जयः पराजयो वा स्यादविशेषात्?। न कस्यचिदिति चेत्; तर्हि साधनवादिनो वचनाधिक्यकारिणः साधनसामर्थ्याज्ञानसिद्धेः प्रतिवादिनश्च वचनाधिक्यदोषोद्भावनात्तद्दोषमात्र[5]ज्ञानसिद्धेर्न कस्यचिज्जयः पराजयो वा स्यात्। नहि यो यद्दोषं वेत्ति स तद्गुणमपि, कुतश्चिन्मारणशक्तौ वेदनेऽपि [6]विषद्रव्यस्य कुष्ठापनयनशक्तौ संवेदनानुदयात्। तन्न तत्सामर्थ्यज्ञानाज्ञाननिबन्धनौ जयपराजयौ व्यवस्थाप- 15 यितुं शक्यौ, यथोक्तदोषानुषङ्गात्। स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ तु तौ निरवद्यौ पक्षप्रतिपक्षपरिग्रहवैयर्थ्याभावात्। कस्यचित् कुतश्चित् स्वपक्षसिद्धौ[7] सुनिश्चितायां परस्य तत्सिद्ध्यभावतः सकृज्जयपराजयप्रसङ्गात्।

§ १०९. यच्चेदमदोषोद्भावनमित्यस्य व्याख्यानम्–प्रसज्यप्रतिषेधे दोषोद्भावनाभावमात्रम्-अदोषोद्भावनम्, पर्युदासे तु दोषाभासानामन्यदोषाणां चोद्भावनं प्रतिवादिनो निग्रह- 20 स्थानमिति–तत् वादिनाऽदोषवति साधने प्रयुक्ते सत्यनुमतमेव यदि वादी स्वपक्षं साधयेन्नान्यथा। वचनाधिक्यं तु दोषः प्रागेव प्रतिविहितः। यथैव हि पञ्चावयवप्रयोगे वचनाधिक्यं[8] निग्रहस्थानं तथा त्र्यवयवप्रयोगे न्यूनतापि स्याद्विशेषाभावात्। प्रतिज्ञादीनि हि पञ्चाप्यनुमानाङ्गम्[9]–"**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः**" [न्याय सू० १.१.३२] इत्यभिधानात्। तेषां मध्येऽन्यतमस्याप्यनभिधाने न्यूनताख्यो दोषो- 25 ऽनुषज्यत एव "**हीनमन्यतमेनापि न्यूनम्**" [न्यायसू० ५.२.१२] इति वचनात्। ततो जयेतरव्यवस्थायां नान्यन्निमित्तमुक्तान्निमित्तादित्यलं प्रसङ्गेन॥ ३५॥

§ ११०. अयं च प्रागुक्तश्चतुरङ्गो वादः कदाचित्पत्रालम्बनमप्यपेक्षतेऽतस्तल्लक्षणमत्रावश्याभिधातव्यं यतो नाविज्ञातस्वरूपस्यास्यावलम्बनं जयाय प्रभवति न चाविज्ञातस्वरूपं परपत्रं भेत्तुं शक्यमित्याह[10]–

---

१ नैकान्ततो जयेत् – डे०। २ –०भासं चोद्भा० – डे०। ३ जयति कथम् – डे०। ४ –०स्य निब० – ता०। ५ –०मात्रे ज्ञा० – ता०। ६ विषयद्र० – ता०। ७ –०सिद्धो निश्चि० – डे०। ८ –०क्यं यथा नि० – डे०। ९ –०मानं प्र० – डे०। १० ॥छ॥ श्रीः ॥ छ ॥ मङ्गलम्॥ महाश्रीः ॥ छ ॥ श्री ॥ – ता०। –० मित्याहुः। इत्याचार्यश्री ५ श्रीहेमचन्द्रविरचितायाः प्रमाणमीमांसायास्तद्वृत्तेश्च द्वितीयस्याध्यायस्य प्रथमाह्निकं समाप्तम्॥ श्री॥ संवत् १७०७ वर्षे मार्गशीर्षमासे कृष्णतृतीयायां पुण्यतिथौ रविवासरे श्रीअणहिल्लपुरपत्तनमध्ये पुस्तकं लिखितमिदं ॥ छ ॥ शुभं भवतु ॥ श्रीकल्याणमस्तु ॥ ९ ॥ श्री ॥ ९ ॥ छ ॥ छ ॥ ९ ॥ – डे०।

प्रमाणमीमांसायाः

# ॥ भा षा टि प्प णा नि ॥

हैमी प्रमाणमीमांसा विशद्यतेऽथ टिप्पणैः।
ऐतिह्य-तुलनास्पृग्भी राष्ट्रभाषोपजीविभिः ॥

पृ० १. पं० २. **'तायिने'**–तुलना–"प्रणम्य शास्त्रे सुगताय तायिने"–प्रमाणस० १. १. "तायिनामिति स्वाधिगतमार्गदेशकानाम्। यदुक्तम्–'तायः स्वदृष्टमार्गोक्तिः' (प्रमाणवा० २. १४५.) इति तत् विद्यते येषामिति। अथवा तायः संतानार्थः।"–बोधिचर्या० प० पृ० ७५ 5

पृ० १. पं० ६. **'पाणिनि'**–पाणिनि का सूत्रात्मक अष्टाध्यायी शब्दानुशासन प्रसिद्ध है। पिङ्गल का छन्दःशास्त्र प्रसिद्ध है। कणाद और अक्षपाद क्रम से दशाध्यायी वैशेषिक-सूत्र और पञ्चाध्यायी न्यायसूत्र के प्रणेता हैं।

पृ० १. पं० ९. **'वाचकमुख्य'**–उमास्वाति और उनके तत्त्वार्थसूत्र के बारे में देखो मेरा लिखा गुजराती तत्त्वार्थविवेचन का परिचय। 10

पृ० १. पं० ११. **'अकलङ्क'**–अकलङ्क ये प्रसिद्ध दिगम्बराचार्य हैं। इनके प्रमाण-संग्रह, न्यायविनिश्चय, सिद्धिविनिश्चय, लघीयस्त्रयी आदि जैनन्यायविषयक अनेक प्रकरण ग्रन्थ हैं। इनका समय ईसवीय अष्टम शताब्दी है।

पृ० १. पं० ११. **'धर्मकीर्त्ति'**–धर्मकीर्त्ति (ई० स० ६२५) बौद्ध तार्किक हैं। इनके प्रमाणवार्त्तिक, हेतुबिन्दु, न्यायबिन्दु, वादन्याय आदि प्रकरणग्रन्थ हैं। 15

पृ० १. पं० १२. **'नास्य स्वेच्छा'**–तुलना–"वचनं राजकीयं वा वैदिकं वापि विद्यते।" श्लोकवा० सू० ४. श्लो० २३५।

पृ० १. पं० १४. **'वर्णसमूहा'**–तुलना–"'शास्त्रं' पुनः प्रमाणादिवाचकपदसमूहो व्यूह-विशिष्टः, पदं पुनर्वर्णसमूहः, पदसमूहः सूत्रम्, सूत्रसमूहः प्रकरणम्, प्रकरणसमूह आह्निकम्, आह्निकसमूहोऽध्यायः, पञ्चाध्यायी शास्त्रम्।"–न्यायवा० पृ० १ 20

पृ० १. पं० १७. **'अथ प्रमाण'**–भारतीय शास्त्र-रचना में यह प्रणाली बहुत पहिले से चली आती है–कि सूत्ररचना में पहिला सूत्र ऐसा बनाया जाय जिससे ग्रन्थ का

विषय सूचित हो और जिसमें ग्रन्थ का नामकरण भी आ जाय। जैसे पातञ्जल योगशास्त्र का प्रथम सूत्र है 'अथ योगानुशासनम्', जैसे अकलंक ने 'प्रमाणसंग्रह' ग्रन्थ के प्रारम्भ में 'प्रमाणे इति संग्रहः' दिया है, जैसे विद्यानन्द ने 'अथ प्रमाणपरीक्षा' इस वाक्य से ही 'प्रमाणपरीक्षा' का प्रारम्भ किया है। आ० हेमचन्द्र ने उसी प्रणाली का अनुसरण 5 करके यह सूत्र रचा है।

'अथ' शब्द से शास्त्रप्रारम्भ करने की परम्परा प्राचीन और विविध विषयक शास्त्रगामिनी है। जैसे "अथातो दर्शपूर्णमासौ व्याख्यास्यामः" ( आप० श्रौ० सू० १. १. १. ), "अथ शब्दानुशासनम्" (पात० महा०), 'अथातो धर्मजिज्ञासा' (जैमि० सू० १. १. १) इत्यादि। आ० हेमचन्द्र ने अपने काव्यानुशासन, छन्दोनुशासन की तरह इस ग्रन्थ में भी वही 10 परम्परा रक्खी है।

पृ० १. पं० १८. 'अथ-इत्यस्य'–अथ शब्द का 'अधिकार' अर्थ प्राचीन समय से ही प्रसिद्ध है और उसे प्रसिद्ध आचार्यों ने लिया भी है जैसा कि हम व्याकरणभाष्य के प्रारम्भ में "अथेत्ययं शब्दोऽधिकारार्थः" (१. १. १. पृ० ६) तथा योगसूत्रभाष्य में (१. १.) पाते हैं। इसके सिवाय उसका 'आनन्तर्य' अर्थ भी प्रसिद्ध है जैसा कि शबर ने अपने 15 मीमांसाभाष्य[1] में लिया है। शङ्कराचार्य[2] ने 'आनन्तर्य' अर्थ तो लिया पर 'अधिकार' अर्थ को असङ्गत समझकर स्वीकृत नहीं किया। शङ्कराचार्य को अथ शब्द का 'मङ्गल' अर्थ लेना इष्ट था, पर एक साथ सीधे तौर से दो अर्थ लेना शास्त्रीय युक्ति के विरुद्ध होने से उन्होंने आनन्तर्यार्थक 'अथ' शब्द के श्रवण को ही मङ्गल मानकर 'मङ्गल' अर्थ लिये बिना ही, 'मङ्गल' का प्रयोजन सिद्ध किया है। योगभाष्य के और शाङ्करभाष्य के प्रसिद्ध 20 टीकाकार वाचस्पति[3] ने तत्त्ववैशारदी और भामती में शङ्करोक्त 'अथ'शब्दश्रुति की मङ्गलप्रयोजनता – मृदङ्ग, शङ्ख आदि ध्वनि के मांगलिक श्रवण की उपमा के द्वारा – पुष्ट की है और साथ ही जलादि अन्य प्रयोजन के वास्ते लाये जानेवाले पूर्ण जलकुम्भ के मांगलिक दर्शन की उपमा देकर एक अर्थ में प्रयुक्त 'अथ' शब्द का अर्थान्तर बिना किये ही उसके श्रवण की माङ्गलिकता दरसाई है।

---

१ "तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः"—**शाबरभा० १.१.१.**

२ "तत्राथशब्दः आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः, ब्रह्मजिज्ञासाया अनधिकार्यत्वात्, मङ्गलस्य च वाक्यार्थे समन्वयाभावात्। अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति"—**ब्र० शाङ्करभा० १.१.१.**

३ "अधिकारार्थस्य चाथशब्दस्यान्यार्थं नीयमानोदकुम्भदर्शनमिव श्रवणं मङ्गलायोपकल्पत इति मन्तव्यम्"—**तत्त्ववै० १. १.** "न चेह मङ्गलमथशब्दस्य वाच्यं वा लक्ष्यं वा, किन्तु मृदङ्गशङ्खध्वनिवदथशब्दश्रवणमात्रकार्यम्। तथा च 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥' अर्थान्तरेष्वानन्तर्यादिषु प्रयुक्तोऽथशब्दः श्रुत्या श्रवणमात्रेण वेणुवीणाध्वनिवन्मङ्गलं कुर्वन्, मङ्गलप्रयोजनो भवति अन्यार्थमानीयमानोदकुम्भदर्शनवत्" – **भामती १.१.१.**

आ० हेमचन्द्र ने उपर्युक्त सभी परम्पराओं का उपयोग करके अपनी व्याख्या में 'अथ' शब्द को अधिकारार्थक, आनन्तर्यार्थक और मंगलप्रयोजनवाला बतलाया है। उनकी उपमा भी शब्दशः वही है जो वाचस्पति के उक्त ग्रन्थों में है।

पृ० २. पं० ३. 'आयुष्म'–तुलना–"मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति"–पात० महा० १.१.१. 5

पृ० २. पं० ४. 'परमेष्ठि'–जैन परम्परा में अर्हत्, सिद्ध, आचार्य, उपाध्याय और साधु ऐसे आत्मा के पाँच विभाग लोकोत्तर विकास के अनुसार किये गये हैं, जो पंचपरमेष्ठी कहलाते हैं। इनका नमस्कार परम मंगल समझा जाता है–

"एष पञ्चनमस्कारः सर्वपापक्षयङ्करः।
मङ्गलानां च सर्वेषां प्रथमं भवति मङ्गलम्॥" 10

पृ० २. पं० ५. 'प्रकर्षेण'–वात्स्यायन ने अपने न्यायभाष्य में (१.१.३.) 'प्रमाण' शब्द को करणार्थक मानकर उसकी निरुक्ति के द्वारा 'प्रमाण' का लक्षण सूचित किया है। वाचस्पति मिश्र ने भी सांख्यकारिका की (तत्त्वकौ० का० ४) अपनी व्याख्या में 'प्रमाण' का लक्षण करने में उसी निर्वचनपद्धति का अवलम्बन किया है। आ० हेमचन्द्र भी 'प्रमाण' शब्द की उसी तरह निरुक्ति करते हैं। ऐसी ही निरुक्ति शब्दशः 'परीक्षामुख' की व्याख्या 15 प्रमेयरत्नमाला (१.१.) में देखी जाती है।

पृ० २. पं० ६. 'त्रयी हि'–उपलभ्य ग्रन्थों में सब से पहिले वात्स्यायनभाष्य[1] में ही शास्त्रप्रवृत्ति के त्रैविध्य की चर्चा है और तीनों विधाओं का स्वरूप भी बतलाया है। श्रीधर ने अपनी 'कंदली'[2] में उस प्राचीन त्रैविध्य के कथन का प्रतिवाद करके शास्त्रप्रवृत्ति को उद्देश-लक्षणरूप से द्विविध स्थापित किया है और परीक्षा को अनियत कहकर उसे त्रैविध्य में से 20 कम किया है। श्रीधर ने नियतरूप से द्विविध शास्त्रप्रवृत्ति का और वात्स्यायन ने त्रिविध शास्त्रप्रवृत्ति का कथन किया इसका सबब स्पष्ट है। श्रीधर कणादसूत्रीय प्रशस्तपादभाष्य

---

१ "त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः–उद्देशो लक्षणं परीक्षा चेति। तत्र नामधेयेन पदार्थमात्रस्याभिधानं उद्देशः। तत्रोद्दिष्टस्य तत्त्वव्यवच्छेदको धर्मो लक्षणम्। लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा"—न्यायभा० १.१.२.

२ "अनुद्दिष्टेषु पदार्थेषु न तेषां लक्षणानि प्रवर्तन्ते निर्विषयत्वात्। अलक्षितेषु च तत्त्वप्रतीत्यभावः कारणाभावात्। अतः पदार्थव्युत्पादनाय प्रवृत्तस्य शास्त्रस्योभयथा प्रवृत्तिः–उद्देशो लक्षणं च, परीक्षायास्तु न नियमः। यत्राभिहिते लक्षणे प्रवादान्तरव्याक्षेपात् तत्त्वनिश्चयो न भवति तत्र परपक्षव्युदासार्थं परीक्षाविधिरधिक्रियते। यत्र तु लक्षणाभिधानसामर्थ्यादेव तत्त्वनिश्चयः स्यात् तत्राय व्यर्थो नार्थ्यते। योऽपि हि त्रिविधां शास्त्रस्य प्रवृत्तिमिच्छति तस्यापि प्रयोजनादीनां नास्ति परीक्षा। तत् कस्य हेतोर्लक्षणमात्रादेव ते प्रतीयन्ते इति। एवं चेदर्थप्रतीत्यनुरोधात् शास्त्रस्य प्रवृत्तिर्न त्रिधैव। नामधेयेन पदार्थानामभिधानमुद्देशः। उद्दिष्टस्य स्वपरजातीयव्यावर्त्तको धर्मो लक्षणम्। लक्षितस्य यथालक्षणं विचारः परीक्षा"—कन्दली पृ० २६.

के व्याख्याकार हैं। वह भाष्य तथा उसके आधारभूत सूत्र, पदार्थों के उद्देश एवं लक्षणात्मक हैं, उनमें परीक्षा का कहीं भी स्थान नहीं है जब कि वात्स्यायन के व्याख्येय मूल न्यायसूत्र ही स्वयं उद्देश, लक्षण और परीक्षाक्रम से प्रवृत्त हैं। त्रिविध प्रवृत्तिवाले शास्त्रों में तर्कप्रधान खण्डन-मण्डन प्रणाली अवश्य होती है–जैसे न्यायसूत्र उसके भाष्य 5 आदि में। द्विविध प्रवृत्तिवाले शास्त्रों में बुद्धिप्रधान स्थापनप्रणाली मुख्यतया होती है जैसे कणादसूत्र, प्रशस्तपादभाष्य, तत्त्वार्थसूत्र, उसका भाष्य आदि। कुछ ग्रन्थ ऐसे भी हैं जो केवल उद्देशमात्र हैं जैसे जैनागम स्थानांग, धर्मसंग्रह आदि। श्रद्धाप्रधान होने से उन्हें मात्र धारणायोग्य समझना चाहिए।

आ० हेमचन्द्र ने वात्स्यायन का ही पदानुगमन क़रीब-क़रीब उन्हीं के शब्दों में 10 किया है।

शास्त्रप्रवृत्ति के चतुर्थ प्रकार विभाग का प्रश्न उठाकर अन्त में उद्योतकर ने न्यायवार्तिक में और जयन्त ने न्यायमञ्जरी में विभाग का समावेश उद्देश में ही किया है[1] और त्रिविध प्रवृत्ति का ही पक्ष स्थिर किया है। आ० हेमचन्द्र ने भी विभाग के बारे में वही प्रश्न उठाया है और समाधान भी वही किया है।

15 पृ० २. पं० ७. 'उद्दिष्टस्य'–'लक्षण' का लक्षण करते समय आ० हेमचन्द्र ने 'असाधारणधर्म' शब्द का प्रयोग किया है। उसका स्पष्टीकरण नव्यन्यायप्रधान तर्कसंग्रह की टीका दीपिका में इस प्रकार है–

"एतद्दूषणत्रय( अव्याप्त्यतिव्याप्त्यसंभव )रहितो धर्मो लक्षणम्। यथा गोः सास्नादिमत्त्वम्। स एवाऽसाधारणधर्म इत्युच्यते। लक्ष्यतावच्छेदकसमनियतत्वमसा- 20 धारणत्वम्"–पृ०१२।

पृ० २. पं० १२. 'पूजितविचार'—वाचस्पति[2] मिश्र ने 'मीमांसा' शब्द को पूजितविचारवाचक कहकर विचार की पूजितता स्पष्ट करने को भामती में लिखा है कि–जिस विचार का फल परम पुरुषार्थ का कारणभूत सूक्ष्मतम अर्थनिर्णय हो वही विचार पूजित है। आ० हेमचन्द्र ने वाचस्पति के उसी भाव को विस्तृत शब्दों में पल्लवित करके अपनी 'मीमांसा' 25 शब्द की व्याख्या में उतारा है, और उसके द्वारा 'प्रमाणमीमांसा' ग्रन्थ के समग्र मुख्य प्रतिपाद्य विषय को सूचित किया है, और यह भी कहा है कि–'प्रमाणमीमांसा' ग्रन्थ का उद्देश्य केवल प्रमाणों की चर्चा करना नहीं है किन्तु प्रमाण, नय और सोपाय बन्ध-मोक्ष इत्यादि परमपुरुषार्थोपयोगी विषयों की भी चर्चा करना है।

---

१ "त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्युक्तम्, उद्दिष्टविभागश्च न त्रिविधाया शास्त्रप्रवृत्तावन्तर्भवतीति। तस्मादुद्दिष्टविभागो युक्तः; न; उद्दिष्टविभागस्योद्देश एवान्तर्भावात्। कस्मात्?। लक्षणसामान्यात्। समानं लक्षणं नामधेयेन पदार्थाभिधानमुद्देश इति।"–**न्यायवा० १. १. ३. न्यायम० पृ० १२.**

२ "पूजितविचारवचनो मीमांसाशब्दः। परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलता च विचारस्य पूजितता"–**भामती० पृ० २७.**

पृ० २ पं० २०. **'सम्यगर्थ'**–प्रमाणसामान्यलक्षण की तार्किक परम्परा के उपलब्ध इतिहास में कणाद का स्थान प्रथम है। उन्होंने "अदुष्टं विद्या" (९. २. १२) कहकर प्रमाणसामान्य का लक्षण कारणशुद्धिमूलक सूचित किया है। अक्षपाद के सूत्रों में लक्षणक्रम में प्रमाणसामान्यलक्षण के अभाव की त्रुटि को वात्स्यायन[1] ने 'प्रमाण' शब्द के निर्वचन द्वारा पूरा किया। उस निर्वचन में उन्होंने कणाद की तरह कारणशुद्धि की तरफ़ ध्यान नहीं रक्खा पर मात्र उपलब्धिरूप फल की ओर नज़र रखकर "उपलब्धिहेतुत्व" को प्रमाणसामान्य का लक्षण बतलाया है। वात्स्यायन के इस निर्वचनमूलक लक्षण में आनेवाले दोषों का परिहार करते हुए वाचस्पति मिश्र[2] ने 'अर्थ' पद का सम्बन्ध जोड़कर और 'उपलब्धि' पद को ज्ञानसामान्यबोधक नहीं पर प्रमाणरूपज्ञानविशेषबोधक मानकर प्रमाणसामान्य के लक्षण को परिपूर्ण बनाया, जिसे उदयनाचार्य[3] ने कुसुमाञ्जलि में 'गौतम-नयसम्मत' कहकर अपनी भाषा में परिपूर्ण रूप से मान्य रक्खा जो पिछले सभी न्याय-वैशेषिक शास्त्रों में समानरूप से मान्य है। इस न्याय-वैशेषिक की परम्परा के अनुसार प्रमाणसामान्यलक्षण में मुख्यतया तीन बातें ध्यान देने योग्य हैं–

१–कारणदोष के निवारण द्वारा कारणशुद्धि की सूचना।

२–विषयबोधक अर्थ पद का लक्षण में प्रवेश।

३–लक्षण में स्व-परप्रकाशत्व की चर्चा का अभाव तथा विषय की अपूर्वता–अनधि-गतता के निर्देश का अभाव।

यद्यपि प्रभाकर[4] और उनके अनुगामी मीमांसक विद्वानों ने 'अनुभूति' मात्र को ही प्रमाणरूप से निर्दिष्ट किया है तथापि कुमारिल एवं उनकी परम्परावाले अन्य मीमांसकों ने न्याय-वैशेषिक तथा बौद्ध दोनों परम्पराओं का संग्राहक ऐसा प्रमाण का लक्षण रचा[5] है; जिसमें 'अदुष्टकारणारब्ध' विशेषण से कणादकथित कारणदोष का निवारण सूचित किया और 'निर्बाधत्व' तथा 'अपूर्वार्थत्व' विशेषण के द्वारा बौद्ध[6] परम्परा का भी समावेश किया।

१ "उपलब्धिसाधनानि प्रमाणानि इति समाख्यानिर्वचनसामर्थ्यात् बोद्धव्यं प्रमीयते अनेन इति करणार्थाभिधानो हि प्रमाणशब्दः"–**न्यायभा० १. १. ३.**

२ "उपलब्धिमात्रस्य अर्थाव्यभिचारिणः स्मृतेरन्यस्य प्रमाशब्देन अभिधानात्"–**तात्पर्य० पृ० २१.**

३ "यथार्थानुभवो मानमनपेक्षतयेष्यते ॥ मितिः सम्यक् परिच्छित्तिः तद्वत्ता च प्रमातृता। तदयोग-व्यवच्छेदः प्रामाण्यं गौतमे मते ॥"–**न्यायकु० ४. १, ५.**

४ "अनुभूतिश्च नः प्रमाणम्"–**बृहती १. १. ५.**

५ "औत्पत्तिकगिरा दोषः कारणस्य निवार्यते। अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता ॥ सर्व-स्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ॥"–**श्लोकवा० औत्प० श्लो० १०, ११.** "एतच्च विशेषणत्रय-मुपाददानेन सूत्रकारेण कारणदोषबाधकज्ञानरहितम् अगृहीतग्राहि ज्ञानं प्रमाणम् इति प्रमाणलक्षणं सूचितम्" –**शास्त्रदी० पृ० १२३.** "अनधिगतार्थगन्तृ प्रमाणम् इति भट्टमीमांसका आहुः"–**सि० चन्द्रो० पृ० २०.**

६ "अज्ञातार्थज्ञापकं प्रमाणम् इति प्रमाणसामान्यलक्षणम्।"–**प्रमाणस० टी० पृ० ११.**

"तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितम् ।
अदुष्टकारणारब्धं प्रमाणं लोकसम्मतम् ॥"

यह श्लोक कुमारिलकर्तृक माना जाता है । इसमें दो बातें ख़ास ध्यान देने की हैं–

१–लक्षण में अनधिगतबोधक 'अपूर्व' पद का अर्थविशेषण रूप से प्रवेश ।

5 २–स्व-परप्रकाशत्व की सूचना का अभाव ।

बौद्ध परम्परा में दिङ्नाग[१] ने प्रमाणसामान्य के लक्षण में 'स्वसंवित्ति' पद का फल के विशेषणरूप से निवेश किया है । धर्मकीर्त्ति[२] के प्रमाणवार्त्तिकवाले लक्षण में वात्स्यायन के 'प्रवृत्तिसामर्थ्य' का सूचक तथा कुमारिल आदि के निर्बाधत्व का पर्याय 'अविसंवादित्व' विशेषण देखा जाता है और उनके न्यायबिन्दुवाले लक्षण में दिङ्नाग के अर्थसारूप्य का 10 ही निर्देश है ( न्यायबि० १. २०. ) । शान्तरक्षित के लक्षण में दिङ्नाग और धर्मकीर्त्ति दोनों के आशय का संग्रह देखा जाता है–

"विषयाधिगतिश्चात्र प्रमाणफलमिष्यते ।
स्ववित्तिर्वा प्रमाणं तु सारूप्यं योग्यतापि वा ॥"–तत्त्वसं० का० १३४४.

इसमें भी दो बातें ख़ास ध्यान देने की हैं–

15 १–अभी तक अन्य परम्पराओं में स्थान नहीं प्राप्त 'स्वसंवेदन'विचार का प्रवेश और तद्द्वारा ज्ञानसामान्य में स्व-परप्रकाशत्व की सूचना ।

असङ्ग और वसुबन्धु ने विज्ञानवाद स्थापित किया । पर दिङ्नाग ने उसका समर्थन बड़े ज़ोरों से किया । उस विज्ञानवाद की स्थापना और समर्थनपद्धति में ही स्वसंविदितत्व या स्वप्रकाशत्व का सिद्धान्त स्फुटतर हुआ जिसका एक या दूसरे रूप में अन्य दार्शनिकों पर 20 भी प्रभाव पड़ा—देखो Buddhist Logic vol. I. P. 12

२–मीमांसक की तरह स्पष्ट रूप से 'अनधिगतार्थक ज्ञान' का ही प्रामाण्य ।

श्वेताम्बर दिगम्बर दोनों जैन परम्पराओं के प्रथम तार्किक सिद्धसेन और समन्तभद्र ने अपने[३] अपने लक्षण में स्व-परप्रकाशार्थक 'स्व-परावभासक' विशेषण का समान रूप से निवेश किया है । सिद्धसेन के लक्षण में 'बाधविवर्जित' पद उसी अर्थ में है जिस अर्थ में मीमांसक 25 का 'बाधवर्जित' या धर्मकीर्त्ति का 'अविसंवादि' पद है । जैन न्याय के प्रस्थापक अकलंक[४]

---

१ "स्वसंवित्तिः फलं चात्र तद्रूपादर्थनिश्चयः । विषयाकार एवास्य प्रमाणं तेन मीयते ॥"–**प्रमाणस० १. १०.**

२ "प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः । अविसंवादनं शाब्देऽप्यभिप्रायनिवेदनात् ॥–**प्रमाणवा० २. १.**

३ "प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् ।"—**न्याया० १.** "तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनम् ।"–**आप्तमी० १०१.** "स्वपरावभासकं यथा प्रमाणं भुवि बुद्धिलक्षणम्"–**बृ० स्वयं० ६३.**

४ "प्रमाणमविसंवादि ज्ञानम्, अनधिगतार्थाधिगमलक्षणत्वात् ।"—**अष्टश० अष्टस० पृ० १७५.** तदुक्तम्—"सिद्धं यन्न परापेक्ष्यं सिद्धौ स्वपररूपयोः । तत् प्रमाणं ततो नान्यदविकल्पमचेतनम् ।" **न्यायवि० टी० लि० पृ० ३०.** उक्त कारिका सिद्धिविनिश्चय की है जो अकलंक की ही कृति है ।

ने कहीं 'अनधिगतार्थक' और 'अविसंवादि' दोनों विशेषणों का प्रवेश किया और कहीं 'स्वपरावभासक' विशेषण का भी समर्थन किया है। अकलंक के अनुगामी माणिक्यनन्दी[१] ने एक ही वाक्य में 'स्व' तथा 'अपूर्वार्थ' पद दाख़िल करके सिद्धसेन-समन्तभद्र की स्थापित और अकलंक के द्वारा विकसित जैन परम्परा का संग्रह कर दिया। विद्यानन्द[२] ने अकलंक तथा माणिक्यनन्दी की उस परंपरा से अलग होकर केवल सिद्धसेन और समन्तभद्र की व्याख्या को अपने 'स्वार्थव्यवसायात्मक' जैसे शब्द में संगृहीत किया और 'अनधिगत' या 'अपूर्व' पद जो अकलंक और माणिक्यनन्दी की व्याख्या में हैं, उन्हें छोड़ दिया। विद्यानन्द का 'व्यवसायात्मक' पद जैन परम्परा के प्रमाणलक्षण में प्रथम ही देखा जाता है पर वह अक्षपाद[३] के प्रत्यक्षलक्षण में तो पहिले ही से प्रसिद्ध रहा है। सन्मति के टीकाकार अभयदेव[४] ने विद्यानन्द का ही अनुसरण किया पर 'व्यवसाय' के स्थान में 'निर्णीति' पद रक्खा। वादी[५] देवसूरि ने तो विद्यानंद के ही शब्दों को दोहराया है। आ० हेमचन्द्र ने उपर्युक्त जैन-जैनेतर भिन्न भिन्न परंपराओं का औचित्य-अनौचित्य विचार कर अपने लक्षण में केवल 'सम्यक्', 'अर्थ' और 'निर्णय' ये तीन पद रक्खे। उपर्युक्त जैन परम्पराओं को देखते हुए यह कहना पड़ता है कि आ० हेमचन्द्र ने अपने लक्षण में काट-छाँट के द्वारा संशोधन किया है। उन्होंने 'स्व' पद जो पूर्ववर्ती सभी जैनाचार्यों ने लक्षण में सन्निविष्ट किया था, निकाल दिया। 'अवभास', 'व्यवसाय' आदि पदों को स्थान न देकर अभयदेव के 'निर्णीति' पद के स्थान में 'निर्णय' पद दाख़िल किया और उमास्वाति, धर्मकीर्त्ति तथा भासर्वज्ञ के सम्यक्[६] पद को अपनाकर अपना 'सम्यगर्थनिर्णय' लक्षण निर्मित किया है।

आर्थिक तात्पर्य में कोई ख़ास मतभेद न होने पर भी सभी दिगम्बर-श्वेताम्बर आचार्यों के प्रमाणलक्षण में शाब्दिक भेद है, जो किसी अंश में विचारविकास का सूचक और किसी अंश में तत्कालीन भिन्न भिन्न साहित्य के अभ्यास का परिणाम है। यह भेद संक्षेप में चार विभागों में समा जाता है। पहिले विभाग में 'स्व-परावभास' शब्दवाला सिद्धसेन-समन्तभद्र का लक्षण आता है जो संभवतः बौद्ध विज्ञानवाद के स्व-परसंवेदन की विचारछाया से ख़ाली नहीं है; क्योंकि इसके पहिले आगम ग्रन्थों में यह विचार नहीं देखा जाता। दूसरे विभाग में अकलंक-माणिक्यनन्दी का लक्षण आता है जिसमें 'अविसंवादि', 'अनधिगत' और 'अपूर्व' शब्द आते हैं जो असंदिग्ध रूप से बौद्ध और मीमांसक ग्रन्थों के ही हैं। तीसरे

१ "स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् ।"–**परी० १. १**

२ तत्स्वार्थव्यवसायात्मज्ञानं मानमितीयता । लक्षणेन गतार्थत्वात् व्यर्थमन्यद्विशेषणम् ॥"–**तत्त्वार्थश्लो० १. १०. ७७. प्रमाणप० पृ० ५३.**

३ "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ।"–**न्याय सू० १.१.४.**

४ "प्रमाणं स्वार्थनिर्णीतिस्वभावं ज्ञानम् ।"–**सन्मतिटी०. पृ० ५१८.**

५ "स्वपरव्यवसायि ज्ञान प्रमाणम् ।"–**प्रमाणन० १. २.**

६ "सम्यग्दर्शनज्ञानचरित्राणि मोक्षमार्गः ।"–**तत्त्वार्थ० १. १.** "सम्यग्ज्ञानपूर्विका सर्व पुरुषार्थसिद्धिः ।"–**न्यायवि० १. १.** "सम्यगनुभवसाधनं प्रमाणम् ।"–**न्यायसार पृ० १.**

विभाग में विद्यानन्द, अभयदेव और देवसूरि के लक्षण का स्थान है जो वस्तुतः सिद्धसेन-समन्तभद्र के लक्षण का शब्दान्तर मात्र है पर जिसमें अवभास के स्थान में 'व्यवसाय' या 'निर्णीति' पद रखकर विशेष अर्थ समाविष्ट किया है। अन्तिम विभाग में मात्र आ० हेमचन्द्र का लक्षण है जिसमें 'स्व', 'अपूर्व', 'अनधिगत' आदि सब उड़ाकर परिष्कार 5 किया गया है।

पृ० २. पं० २१. **'प्रसिद्धानुवादेन'**–लक्षण के प्रयोजन की विभिन्न चर्चाओं के अन्तिम तात्पर्य में कोई भेद नहीं जान पड़ता तथापि उनके ढंग जुदे जुदे और बोधप्रद हैं। एक ओर न्याय-वैशेषिक शास्त्र हैं और दूसरी ओर बौद्ध तथा जैनशास्त्र हैं। सभी न्याय-वैशेषिक ग्रन्थों[1] में लक्षण का प्रयोजन 'इतरभेदज्ञापन' बतलाकर लक्षण को 'व्यतिरेकिहेतु' माना 10 है और साथ ही 'व्यवहार' का भी प्रयोजक बतलाया है।

बौद्ध विद्वान् धर्मोत्तर ने प्रसिद्ध का अनुवाद करके अप्रसिद्ध के विधान को लक्षण का प्रयोजन विस्तार से प्रतिपादित किया है, जिसका[2] देवसूरि ने बड़े विस्तार तथा आटोप के साथ निरसन किया है। अकलंक[3] का झुकाव व्यावृत्ति को प्रयोजन मानने की ओर है; परन्तु आ० हेमचन्द्र ने धर्मोत्तर के कथन का आदर करके अप्रसिद्ध के विधान को लक्षणार्थ 15 बतलाया है।

पृ० २. पं० २३. **'भवति हि'**–हेमचन्द्र ने इस जगह जो 'लक्ष्य' को पक्ष बना कर 'लक्षण' सिद्ध करनेवाला 'हेतुप्रयोग' किया है वह बौद्ध-जैन ग्रन्थों में एक सा है।

१ "तत्रोद्दिष्टस्य तत्त्वव्यवच्छेदको धर्मो लक्षणम्"–**न्यायभा० १. १. २.** "लक्षणस्य इतरव्यवच्छेदहेतुत्वात्"– **न्यायवा० १. १. ३.** "लक्षणा नाम व्यतिरेकिहेतुवचनम्। तद्धि समानासमानजातीयेभ्यो विभिद्य लक्ष्य व्यवस्थापयति "–**तात्पर्य० १.१.३.** "समानासमानजातीयव्यवच्छेदो लक्षणार्थः"–**न्यायम० पृ०६५.** "लक्षणस्य व्यवहारमात्रसारतया समानासमानजातीयव्यवच्छेदमात्रसाधनत्वेन चान्याभावप्रतिपादनासामर्थ्यात्"–**कन्दली० पृ० ८.** "व्यावर्त्तकस्यैव लक्षणत्वे व्यावृत्तौ अभिधेयत्वादौ च अतिव्याप्तिवारणाय तद्भिन्नत्व धर्मविशेषणं देयम्। व्यवहारस्यापि लक्षणप्रयोजनत्वे तु न देयम्, व्यावृत्तेरपि व्यवहारसाधनत्वात्।"–**दीपिका० पृ० १३.** "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्।"–**तर्कदी० गंगा पृ० १६.** "ननु लक्षणमिद व्यतिरेकिलिङ्गमितरभेदसाधकं व्यवहारसाधकं वा।"–**वै० उप० २. १. १.**

२ "तत्र प्रत्यक्षमनूद्य कल्पनापोढत्वमभ्रान्तत्वं च विधीयते। यत्तद्भवतामस्माकं चार्थेषु साक्षात्कारिज्ञानं प्रसिद्धं तत्कल्पनापोढाभ्रान्तत्वयुक्तं द्रष्टव्यम्। न चैतन्मन्तव्यं कल्पनापोढाभ्रान्तत्वं चेदप्रसिद्धं किमन्यत् प्रत्यक्षस्य ज्ञानस्य रूपमवशिष्यते यत्प्रत्यक्षशब्दवाच्य सदनूद्येतेति ?। यस्मादिन्द्रियान्वयव्यतिरेकानुविधाय्यर्थेषु साक्षात्कारिज्ञानं प्रत्यक्षशब्दवाच्यं सर्वेषां सिद्ध तदनुवादेन कल्पनापोढाभ्रान्तत्वविधिः।" **न्यायबि० टी० १. ४.** "अत्राह धर्मोत्तरः—लक्ष्यलक्षणभावविधानवाक्ये लक्ष्यमनूद्य लक्षणमेव विधीयते। लक्ष्यं हि प्रसिद्धं भवति ततस्तदनुवाद्यम्, लक्षणं पुनः अप्रसिद्धमिति तद्विधेयम्। अज्ञातज्ञापन विधिरित्यभिधानात्। सिद्धे तु लक्ष्यलक्षणभावे लक्षणमनूद्य लक्ष्यमेव विधीयते इति; तदेतदबन्धुरम्; लक्ष्यवल्लक्षणस्यापि प्रसिद्धिर्न हि न सिद्धेति कुतस्तस्याप्यज्ञातत्वनिबन्धनो विधिरप्रतिबद्धः सिद्ध्येत्।"–**स्याद्वादर० पृ० २०.**

३ "परस्परव्यतिकरे सति येनान्यत्वं लक्ष्यते तल्लक्षणम्।" **तत्त्वार्थरा० पृ० ८२.**

और 'विशेष' को 'पक्ष' बनाकर 'सामान्य' को 'हेतु' बनाने की युक्ति भी एक जैसी है[१]।

पृ० ३. पं० १. **'तत्र निर्णयः'**–तुलना–"विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः"–न्यायसू० १. १. ४१।

पृ० ३. पं० ३. **'अर्यते अर्थ्यते'**–प्रमेय–अर्थ के प्रकार के विषय में दार्शनिकों का मत-भेद है। न्याय-वैशेषिक परम्परा के सभी प्रधान आचार्यों[२] का मत हेय-उपादेय-उपेक्षणीय-रूप से तीन प्रकार के अर्थ मानने का है। बौद्ध धर्मोत्तर[३] उपेक्षणीय को हेय में अन्तर्भावित करके दो ही प्रकार का अर्थ मानता है जिसका शब्दशः अनुसरण दिगम्बर तार्किक प्रभाचन्द्र ने माणिक्यनंदी के सूत्र का यथाश्रुत अर्थ करके किया है। देवसूरि की सूत्ररचना में तो माणिक्यनन्दी के सूत्र की यथावत् छाप है फिर भी स्वोपज्ञ व्याख्या में देवसूरि ने धर्मोत्तर के मत को प्रभाचन्द्र की तरह स्वीकार न करके त्रिविध अर्थ माननेवाले न्याय-वैशेषिक पक्ष को ही स्वीकार किया है,[४] जैसा कि सन्मतिटीकाकार (पृ० ४६६) ने किया है।

---

१ "सम्यग्ज्ञानं प्रमाणं प्रमाणत्वान्यथानुपपत्तेः"–**प्रमाणप० पृ० १. न्यायकुमु० लि० पृ० ३६. प्रमेयक० १. १.** "तत्सम्भवसाधकस्य प्रमाणत्वाख्यस्य हेतोः सद्भावात्। ननु यदेव प्रमाणं धर्मित्वेनात्र निर्देशि कथं तस्यैव हेतुत्वमुपपन्नमिति चेत्; ननु किमस्य हेतुत्वानुपपत्तौ निमित्तम्–किं धर्मित्वहेतुत्वयोर्विरोधः ?। किं वा प्रतिज्ञार्थैकदेशत्वम् ?। यद्वाऽनन्वयत्वम् ?। तत्राद्यपक्षेऽयमभिप्रायः–धर्माणामधिकरणं धर्मी तदधिकरणास्तु धर्माः। ततो यद्यत्र प्रमाणं धर्मि कथं हेतुः ?। स चेत्; कथं धर्मि, हेतोर्धर्मत्वात् धर्मधर्मिणोश्चैक्यानुपपत्तेः ?। तदयुक्तम्। विशेषं धर्मिणं विधाय सामान्यं हेतुमभिदधतां दोषासम्भवात्। प्रमाणं हि प्रत्यक्षपरोक्षव्यक्तिलक्षणं धर्म्मि। प्रमाणत्वसामान्यं हेतुः। ततो नात्र सर्वथैक्यम्। कथञ्चिदैक्यं तु भवदपि न धर्मधर्मिभावं विरुणद्धि। प्रत्युत तत्प्रयोजकमेव, तदन्तरेण धर्मधर्मिभावेऽतिप्रसङ्गात्।"–**स्याद्वादर० पृ० ४१, ४२. प्रमेयर० १ १** "ननु प्रत्ययविशेषो धर्मी सामान्यं साधनमिति न प्रतिज्ञार्थैकदेशता"–**प्रमाणवार्त्तिकालङ्कार पृ० ६२।**

२ "अप्रतीयमानमर्थं कस्माज्जिज्ञासते ?। तं तत्त्वतो ज्ञातं हास्यामि वोपादास्य उपेक्षिष्ये वेति। ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थस्तदर्थमयं जिज्ञासते"–**न्यायभा० १. १. ३२.** "पुरुषापेक्षया तु प्रामाण्ये चन्द्रतारकादिविज्ञानस्य पुरुषानपेक्षितस्य अप्रामाण्यप्रसङ्गः। न चातिदवीयस्तया तदर्थस्य हेयतया तदपि पुरुषस्यापेक्षितम्, तस्योपेक्षणीयविषयत्वात्। न चोपेक्षणीयमपि अनुपादेयत्वात् हेयमिति निवेदयिष्यते" (१. १. ३. पृ० १०३)–**तात्पर्य० पृ० २१. न्यायम० पृ० २४.** "प्रमितिर्गुणदोषमाध्यस्थ्यदर्शनम्। गुणदर्शनमुपादेयत्वज्ञानम्, दोषदर्शनं हेयत्वज्ञानम्, माध्यस्थ्यदर्शनं न हेयं नोपादेयमिति ज्ञानं प्रमितिः।"–**कन्दली पृ० १९६।**

३ "पुरुषस्यार्थः अर्थ्यत इत्यर्थः काम्यत इति यावत्। हेयोऽर्थः उपादेयो वा। हेयो ह्यर्थो हातुमिष्यते उपादेयोऽप्युपादातुम्। न च हेयोपादेयाभ्यामन्यो राशिरस्ति। उपेक्षणीयो ह्यनुपादेयत्वात् हेय एव"–**न्यायबि० टी० १. १।**

४ "हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत्"–**परी० १. २.** "अर्थ्यते अभिलष्यते प्रयोजनार्थिभिरित्यर्थो हेय उपादेयश्च। उपेक्षणीयस्यापि परित्यजनीयत्वात् हेयत्वम्, उपादानक्रियां प्रति अकर्मभावात् नोपादेयत्वम् हानक्रियां प्रति विपर्ययात् तत्त्वम्। तथा च लोको वदति–अहमनेन उपेक्षणीयत्वेन परित्यक्त इति"–**प्रमेयक० पृ० २ A.** "अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं हि प्रमाणम् अतो

आ० हेमचन्द्र ने भी उसी त्रिविध अर्थ के पक्ष को ही लिया है पर उसके स्थापन में नई युक्ति का उपयोग किया है।

पृ० ३. पं० ४. 'न चानुपादेय'–तुलना–"ननु कोऽयमुपेक्षणीयो नाम विषयः? । स हि उपेक्षणीयत्वादेव नोपादीयते चेत्; स तर्हि हेय एव, अनुपादेयत्वादिति । नैतद् युक्तम्, उपेक्षणीयविषयस्य स्वसंवेद्यत्वेन अप्रत्याख्येयत्वात् ।

हेयोपादेययोरस्ति दुःख-प्रीतिनिमित्तता ।
यत्नेन हानोपादाने भवतस्तत्र देहिनाम् ॥
यत्नसाध्यद्वयाभावादुभयस्यापि साधनात् ।
ताभ्यां विसदृशं वस्तु स्वसंविदितमस्ति नः ॥
उपादेये च विषये दृष्टे रागः प्रवर्तते ।
इतरत्र तु विद्वेषस्तत्रोभावपि दुर्लभौ ॥

यत्तु अनुपादेयत्वात् हेय एवेति, तदप्रयोजकम्, न ह्येवं भवति, यदेतद् नपुंसकं स पुमान्, अस्त्रीत्वात् । स्त्री वा नपुंसकं अपुंस्त्वादिति । स्त्रीपुंसाभ्यामन्यदेव नपुंसकम्, तथोपलभ्यमानत्वात् । एवमुपेक्षणीयोऽपि विषयो हेयोपादेयाभ्यामर्थान्तरम्, तथोपलम्भादिति ।

यदेतत् तृणपर्णादि चकास्ति पथि गच्छतः ।
न धीश्छत्रादिवत् तत्र न च काकोदरादिवत् ॥"–न्यायम० पृ० २४-२५.

पृ० ३. पं० ६. 'सम्यग्'–तुलना–"तत्र सम्यगिति प्रशंसार्थो निपातः समञ्चतेर्वा भावः"–तत्त्वार्थभा० १ १.

पृ० ३. पं० ११. 'संभव'–तुलना–

"संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत् ।
न शैत्येन न चौष्ण्येन वह्निः क्वापि विशिष्यते ॥"–तन्त्रवा० पृ० २०८.
"संभवव्यभिचाराभ्यां विशेषणविशेष्ययोः ।
दृष्टं विशेषणं लोके यथेहापि तथेक्ष्यताम् ॥"–बृहदा० वा० पृ० २०१२.

"संभवे व्यभिचारे च विशेषणं युक्तम्–"हेतुबि० टी० लि० पृ० ६१.

पृ० ३. पं० १६. 'न चासावसन्'–आ० हेमचन्द्र ने 'स्वप्रकाशत्व' के स्थापन और ऐकान्तिक 'परप्रकाशकत्व' के खंडन में बौद्ध, प्रभाकर, वेदान्त आदि सभी 'स्वप्रकाश'वादियों की युक्तियों का संग्राहक उपयोग किया है।

---

ज्ञानमेवेदम्" प्रमाणन० १. ३ । "अभिमतानभिमतयोरुपलक्षणत्वादभिमतानभिमतोभयाभावस्वभाव उपेक्षणीयोऽप्यत्रार्थो लक्षयितव्यः । रागगोचरः खल्वभिमतः । द्वेषविषयोऽनभिमतः । रागद्वेषद्वितयानालम्बनं तृणादिरुपेक्षणीयः । तस्य चोपेक्षकं प्रमाणं तदुपेक्षायां समर्थमित्यर्थः ॥"–स्याद्वादर० १. २ ।

पृ० ३. पं० १६. 'घटमहं जानामि'–तुलना–"घटमहमात्मना वेद्मि। कर्मवत् कर्तृकरण-क्रियाप्रतीतेः।"–परी० १. ८, ९

पृ० ३. पं० १७. 'न च अप्रत्यक्षोपलम्भस्य'–तुलना–"तदाह–धर्मकीर्त्तिः 'अप्रत्यक्षो०' न्यायवि० टी० लि० पृ० १०६ B; पृ० ५८२ B. "अप्रसिद्धोपलम्भस्य नार्थवित्तिः प्रसिद्ध्यति" तत्त्वसं० का० २०७४. 5

पृ० ३. पं० २२ 'तस्मादर्थोन्मुख'–तुलना–"स्वोन्मुखतया प्रतिभासनं स्वस्य व्यवसायः। अर्थस्येव तदुन्मुखतया।" परी० १. ६, ७.

पृ० ४. पं० १०. 'स्वनिर्णय'–आ० हेमचन्द्र ने अपने लक्षण में 'स्व' पद जो पूर्ववर्ती सभी जैनाचार्यों के लक्षण में वर्तमान है उसे जब नहीं रक्खा तब उनके सामने प्रश्न उपस्थित हुआ कि क्या प्राचीनआचार्यसंमत 'स्वप्रकाशत्व' इष्ट न होने से 'स्व'पद का त्याग करते 10 हो या अन्य किसी दृष्टि से ? । इसका उत्तर उन्होंने इस सूत्र में दिया कि ज्ञान तो 'स्वप्रकाश' ही है पर व्यावर्त्तक न होने से लक्षण में उसका प्रवेश अनावश्यक है। ऐसा करके अपना विचारस्वातंत्र्य उन्होंने दिखाया और साथ ही वृद्धों का खण्डन न करके 'स्व'पदप्रयोग की उनकी दृष्टि दिखाकर उनके प्रति आदर भी व्यक्त किया।

पृ० ४. पं० १५. 'ननु च परिच्छिन्नमर्थम्'–तुलना–"अधिगतं चार्थमधिगमयता प्रमाणेन 15 पिष्टं पिष्टं स्यात्।"–न्यायवा० पृ० ५.

पृ० ४. पं० १६. 'धारावाहिज्ञानानाम्'–भारतीय प्रमाणशास्त्रों में 'स्मृति' के प्रामाण्य-अप्रामाण्य की चर्चा प्रथम से ही चली आती देखी जाती है पर धारावाहिक ज्ञानों के प्रामाण्य-अप्रामाण्य की चर्चा संभवतः बौद्ध परम्परा में धर्मकीर्त्ति के बाद दाखिल हुई। एक बार प्रमाणशास्त्रों में प्रवेश होने के बाद तो फिर वह सर्वदर्शनव्यापी हो गई और 20 इसके पक्ष-प्रतिपक्ष में युक्तियाँ तथा वाद स्थिर हो गये और ख़ास-ख़ास परम्पराएँ बन गईं।

वाचस्पति, श्रीधर, जयन्त, उदयन आदि सभी[1] न्याय-वैशेषिक दर्शन के विद्वानों ने 'धारावाहिक' ज्ञानों को अधिगतार्थक कहकर भी प्रमाण ही माना है और उनमें 'सूक्ष्मकाल-कला' के भान का निषेध ही किया है। अतएव उन्होंने प्रमाण लक्षण में 'अनधिगत' 25 आदि पद नहीं रक्खे।

---

१ "अनधिगतार्थगन्तृत्वं च धारावाहिकविज्ञानानामधिगतार्थगोचराणां लोकसिद्धप्रमाणभावानां प्रामाण्यं विहन्तीति नाद्रियामहे। न च कालभेदेनानधिगतगोचरत्वं धारावाहिकानामिति युक्तम्। परम-सूक्ष्माणां कालकलादिभेदानां पिशितलोचनैरस्मादृशैरनाकलनात्। न चाद्येनैव विज्ञानेनोपदर्शितत्वादर्थस्य प्रवर्तितत्वात् पुरुषस्य प्रापितत्वाच्चोत्तरेषामप्रामाण्यमेव ज्ञानानामिति वाच्यम्। नहि विज्ञानस्यार्थप्रापणं प्रवर्तनादन्यद्, न च प्रवर्तनमर्थप्रदर्शनादन्यत्। तस्मादर्थप्रदर्शनमात्रव्यापारमेव ज्ञानं प्रवर्त्तकं प्रापकं च। प्रदर्शनं च पूर्ववदुत्तरेषामपि विज्ञानानामभिन्नमिति कथं पूर्वमेव प्रमाणं नोत्तराण्यपि ?।"–तात्पर्य० पृ० २१. कन्दली पृ० ६१. न्यायमं० पृ० २२. न्यायकु० ४. १।

मीमांसक की प्रभाकरीय और कुमारिलीय दोनों परम्पराओं में भी धारावाहिक ज्ञानों का प्रामाण्य ही स्वीकार किया है। पर दोनों ने उसका समर्थन भिन्न-भिन्न प्रकार से किया है। प्रभाकरानुगामी शालिकनाथ[1] 'कालकला' का भान बिना माने ही 'अनुभूति' होने मात्र से उन्हें प्रमाण कहते हैं, जिस पर न्याय-वैशेषिक परम्परा की छाप स्पष्ट है। 5 कुमारिलानुगामी पार्थसारथि[2], 'सूक्ष्मकालकला' का भान मानकर ही उनमें प्रामाण्य का उपपादन करते हैं क्योंकि कुमारिलपरम्परा में प्रमाणलक्षण में 'अपूर्व' पद होने से ऐसी कल्पना बिना किये 'धारावाहिक' ज्ञानों के प्रामाण्य का समर्थन किया नहीं जा सकता। इस पर बौद्ध और जैन कल्पना की छाप जान पड़ती है।

बौद्ध-परम्परा में यद्यपि धर्मोत्तर[3] ने स्पष्टतया 'धारावाहिक' का उल्लेख करके तो कुछ 10 नहीं कहा है, फिर भी उसके सामान्य कथन से उसका झुकाव 'धारावाहिक' को अप्रमाण मानने का ही जान पड़ता है। हेतुबिन्दु की टीका में अर्चट[4] ने 'धारावाहिक' के विषय में अपना मन्तव्य प्रसंगवश स्पष्ट बतलाया है। उसने योगिगत 'धारावाहिक' ज्ञानों को तो 'सूक्ष्म कालकला' का भान मानकर प्रमाण कहा है। पर साधारण प्रमाताओं के धारा-वाहिकों को सूक्ष्मकालभेदग्राहक न होने से अप्रमाण ही कहा है। इस तरह बौद्ध पर-15 म्परा में प्रमाता के भेद से 'धारावाहिक' के प्रामाण्य-अप्रामाण्य का स्वीकार है।

---

१ "धारावाहिकेषु तर्ह्युत्तरविज्ञानानि स्मृतिप्रमोषादविशिष्टानि कथं प्रमाणानि ?। तत्राह–अन्योन्य-निरपेक्षास्तु धारावाहिकबुद्धयः। व्याप्रियमाणे हि पूर्वविज्ञानकारणकलाप उत्तरेषामप्युत्पत्तिरिति न प्रतीतित उत्पत्तितो वा धारावाहिकविज्ञानानि परस्परस्यातिशेरत इति युक्ता सर्वेषामपि प्रमाणता।"–**प्रकरणप० पृ० ४२-४३. बृहतीप० पृ० १०३.**

२ "नन्वेवं धारावाहिकेषूत्तरेषां पूर्वगृहीतार्थविषयकत्वादप्रामाण्यं स्यात्। तस्मात् 'अनुभूतिः प्रमाणम्' इति प्रमाणलक्षणम्। .. तस्मात् यथार्थमगृहीतग्राहि ज्ञानं प्रमाणमिति वक्तव्यम्। धारावाहिकेष्व-प्युत्तरोत्तरेषां कालान्तरसम्बन्धस्यागृहीतस्य ग्रहणाद् युक्तं प्रामाण्यम्। सन्नपि कालभेदोऽतिसूक्ष्मत्वान्न परामृष्यत इति चेत्; अहो सूक्ष्मदर्शी देवानांप्रियः! यो हि समानविषयया विज्ञानधारया चिरमवस्थायो-परतः सोऽनन्तरक्षणसम्बन्धितयार्थं स्मरति। तथाहि–किमत्र घटोऽवस्थित इति पृष्टः कथयति–अस्मिन् क्षणे मयोपलब्ध इति। तथा प्रातरारभ्यैतावत्कालं मयोपलब्ध इति। कालभेदे त्वगृहीते कथमेवं वदेत्। तस्मादस्ति कालभेदस्य परामर्शः। तदाधिक्याच्च सिद्धमुत्तरेषां प्रामाण्यम्।"–**शास्त्रदी० पृ० १२४–१२६.**

३ "अत एव अनधिगतविषयं प्रमाणम्। येनैव हि ज्ञानेन प्रथममधिगतोऽर्थः तेनैव प्रवर्तितः पुरुषः प्रापितश्चार्थः तत्रैवार्थे किमन्येन ज्ञानेन अधिकं कार्यम्। ततोऽधिगतविषयमप्रमाणम्।"–**न्यायबि० टी०. पृ० ३.**

४ "यदैकस्मिन्नेव नीलादिवस्तुनि धारावाहीनीन्द्रियज्ञानान्युत्पद्यन्ते तदा पूर्वेणाभिन्नयोगक्षेमत्वात् उत्तरेषामिन्द्रियज्ञानानामप्रामाण्यप्रसङ्गः। न चैवम्, अतोऽनेकान्त इति प्रमाणसंप्लववादी दर्शयन्नाह–पूर्व-प्रत्यक्षक्षणेन इत्यादि। एतत् परिहरति–तद् यदि प्रतिक्षणं क्षणविवेकदर्शिनोऽधिकृत्योच्यते तदा भिन्नोप-योगितया पृथक् प्रामाण्यात् नानेकान्तः। अथ सर्वपदार्थेष्वेकत्वाध्यवसायिनः सांव्यवहारिकान् पुरुषान-भिप्रेत्योच्यते तदा सकलमेव नीलसन्तानमेकमर्थं स्थिररूपं तत्साध्यां चार्थक्रियामेकात्मिकामध्यवस्यन्तीति प्रामाण्यमप्युत्तरेषामनिष्टमेवेति कुतोऽनेकान्तः ?।"–**हेतु० टी० लि०. पृ० ३९B–४१A.**

जैन तर्कग्रन्थों में 'धारावाहिक' ज्ञानों के प्रामाण्य-अप्रामाण्य के विषय में दो परम्पराएँ हैं—दिगम्बरीय और श्वेताम्बरीय। दिगम्बर परम्परा के अनुसार 'धारावाहिक' ज्ञान तभी प्रमाण हैं जब वे क्षणभेदादि विशेष का भान करते हों और विशिष्टप्रमाजनक होते हों। जब वे ऐसा न करते हों तब प्रमाण नहीं हैं। इसी तरह उस परम्परा के अनुसार यह भी समझना चाहिए कि विशिष्टप्रमाजनक होते हुए भी 'धारावाहिक' ज्ञान जिस द्रव्यांश में विशिष्टप्रमाजनक नहीं हैं उस अंश में वे अप्रमाण और विशेषांश में विशिष्टप्रमाजनक होने के कारण प्रमाण हैं अर्थात् एक ज्ञान व्यक्ति में भी विषय भेद की अपेक्षा से प्रामाण्याप्रामाण्य है। अकलङ्क के अनुगामी विद्यानन्द और माणिक्यनन्दी के अनुगामी प्रभाचन्द्र के टीकाग्रन्थों का पूर्वापर अवलोकन उक्त नतीजे पर पहुँचाता[1] है। क्योंकि अन्य सभी जैनाचार्यों की तरह निर्विवाद रूप से 'स्मृतिप्रामाण्य' का समर्थन करनेवाले अकलङ्क और माणिक्यनन्दी अपने-अपने प्रमाण लक्षण में जब बौद्ध और मीमांसक के समान 'अनधिगत' और 'अपूर्व' पद रखते हैं तब उन पदों की सार्थकता उक्त तात्पर्य के सिवाय और किसी प्रकार से बतलाई ही नहीं जा सकती चाहे विद्यानन्द और प्रभाचन्द्र का स्वतन्त्र मत कुछ भी रहा हो।

बौद्ध[2] विद्वान् विकल्प और स्मृति दोनों में, मीमांसक स्मृति मात्र में स्वतन्त्र प्रामाण्य नहीं मानते। इसलिए उनके मत में तो 'अनधिगत' और 'अपूर्व' पद का प्रयोजन स्पष्ट है। पर जैन परम्परा के अनुसार वह प्रयोजन नहीं है।

श्वेताम्बर परम्परा के सभी विद्वान् एक मत से धारावाहिज्ञान को स्मृति की तरह प्रमाण मानने के ही पक्ष में हैं। अतएव किसी ने अपने प्रमाणलक्षण में 'अनधिगत' 'अपूर्व' आदि जैसे पद को स्थान ही नहीं दिया। इतना ही नहीं, बल्कि उन्होंने स्पष्टरूपेण यह कह दिया कि चाहे ज्ञान गृहीतग्राही हो तब भी वह अगृहीतग्राही के समान ही प्रमाण है। उनके विचारानुसार गृहीतग्राहित्व प्रामाण्य का विघातक नहीं, अतएव उनके मत से एक धारावाहिक ज्ञानव्यक्ति में विषयभेद की अपेक्षा से प्रामाण्य-अप्रामाण्य मानने की ज़रूरत नहीं और न तो कभी किसी को अप्रमाण मानने की ज़रूरत है।

---

१ "गृहीतमगृहीतं वा स्वार्थं यदि व्यवस्यति। तन्न लोके न शास्त्रेषु विजहाति प्रमाणताम्॥"—**तत्त्वार्थश्लो० १. १०. ७८**। "प्रमान्तरागृहीतार्थप्रकाशित्वं प्रपञ्चतः। प्रामाण्यं च गृहीतार्थग्राहित्वेपि कथंचन॥"—**तत्त्वार्थश्लो० १. १३. ६४**। "गृहीतग्रहणात् तत्र न स्मृतेश्चेत्प्रमाणता। धारावाह्यक्षविज्ञानस्यैवं लभ्येत केन सा॥"—**तत्त्वार्थश्लोकवा० १. १३. १५.** "नन्वेवमपि प्रमाणसंप्लववादिताव्याघातः प्रमाणप्रतिपन्नेऽर्थे प्रमाणान्तराप्रतिपत्तिरित्यचोद्यम्। अर्थपरिच्छित्तिविशेषसद्भावे तत्प्रवृत्तेरप्यभ्युपगमात्। प्रथमप्रमाणप्रतिपन्ने हि वस्तुन्याकारविशेषं प्रतिपद्यमानं प्रमाणान्तरमपूर्वार्थमेव वृक्षो न्यग्रोध इत्यादिवत्।"—**प्रमेयक० पृ० १६**।

२ "यद् गृहीतग्राहि ज्ञानं न तत्प्रमाणं, यथा स्मृतिः, गृहीतग्राही च प्रत्यक्षपृष्ठभावी विकल्प इति व्यापकविरुद्धोपलब्धि." —**तत्त्वसं० प० का० १२९८**।

श्वेताम्बर आचार्यों में भी आ० हेमचन्द्र की ख़ास विशेषता है क्योंकि उन्होंने गृहीतग्राही और ग्रहीष्यमाणग्राही दोनों का समत्व दिखाकर सभी धारावाहिज्ञानों में प्रामाण्य का जो समर्थन किया है वह ख़ास मार्के का है।

पृ० ४. पं० १८. **'तत्रापूर्वार्थ'**–तुलना–हेतुबि० टी० लि० पृ० ८७.

5 पृ० ४. पं० १९ **'ग्रहीष्यमाण'**–'अनधिगत' या 'अपूर्व' पद जो धर्मोत्तर, अकलंक, माणिक्यनन्दी आदि के लक्षणवाक्य में है उसको आ० हेमचन्द्र ने अपने लक्षण में जब स्थान नहीं दिया तब उनके सामने यह प्रश्न आया कि 'धारावाहिक' और 'स्मृति' आदि ज्ञान जो अधिगतार्थक या पूर्वार्थिक हैं और जिन्हें अप्रमाण समझा जाता है उनको प्रमाण मानते हो या अप्रमाण ?। यदि अप्रमाण मानते हो तो सम्यगर्थनिर्णयरूप लक्षण अतिव्याप्त हो जाता है।
10 अतएव 'अनधिगत' या 'अपूर्व' पद लक्षण में रखकर 'अतिव्याप्ति' का निरास क्यों नहीं करते ?। इस प्रश्न का उत्तर इस सूत्र में आ० हेमचन्द्र ने उक्त ज्ञानों का प्रामाण्य स्वीकार करके ही दिया है। इस सूत्र की प्रासादिक और अर्थपूर्ण रचना हेमचन्द्र की प्रतिभा और विचारविशदता की द्योतिका है। प्रस्तुत अर्थ में इतना संक्षिप्त, प्रसन्न और सयुक्तिक वाक्य अभी तक अन्यत्र देखा नहीं गया।

15 पृ० ४. पं० २०. **'द्रव्यापेक्षया'**–यद्यपि न्यायावतार की टीका में सिद्धर्षि ने[1] भी अनधिगत विशेषण का खण्डन करते हुए द्रव्यपर्याय रूप से यहाँ जैसे ही विकल्प उठाये हैं तथापि वहाँ आठ विकल्प होने से एक तरह की जटिलता आ गई है। आ० हेमचन्द्र ने अपनी प्रसन्न और संक्षिप्त शैली में दो विकल्पों के द्वारा ही सब कुछ कह दिया है। तत्त्वोपप्लव[2] ग्रन्थ के अवलोकन से और आ० हेमचन्द्र के द्वारा किये गये उसके अभ्यास के अनुमान से एक बात
20 कल्पना में आती है। वह यह कि प्रस्तुत सूत्रगत युक्ति और शब्दरचना दोनों के स्फुरण का निमित्त शायद आ० हेमचन्द्र पर पड़ा हुआ तत्त्वोपप्लव का प्रभाव ही हो।

पृ० ५. पं० ७ **'अनुभयत्र'**–संशय के उपलभ्य लक्षणों को देखने से जान पड़ता है कि कुछ तो कारणमूलक हैं और कुछ स्वरूपमूलक। कणाद, अक्षपाद और किसी बौद्ध-विशेष के

---

१. "तत्रापि सोऽधिगम्योऽर्थः किं द्रव्यम्, उत पर्यायो वा, द्रव्यविशिष्टपर्यायः, पर्यायविशिष्टं वा द्रव्यमिति, तथा किं सामान्यम्, उत विशेषः, आहोस्वित् सामान्यविशिष्टो विशेषः, विशेषविशिष्टं वा सामान्यम् इत्यष्टौ पक्षाः।" **न्याया० सि० टी० पृ० १३.**

२. "अन्ये तु अनधिगतार्थगन्तृत्वेन प्रमाणलक्षणमभिदधति, ते त्वयुक्तवादिनो द्रष्टव्याः। कथमयुक्तवादिता तेषामिति चेत्; उच्यते–विभिन्नकारकोत्पादितैकार्थविज्ञानानां यथाव्यवस्थितैकार्थगृहीतिरूपत्वाविशेषेपि पूर्वोत्पन्नविज्ञानस्य प्रामाण्यं नोत्तरस्य इत्यत्र नियामकं वक्तव्यम्। अथ यथावस्थितार्थगृहीतिरूपत्वाविशेषेपि पूर्वोत्पन्नविज्ञानस्य प्रामाण्यमुपपद्यते न प्रथमोत्तरविज्ञानस्य; तदा अनेनैव न्यायेन प्रथमस्याप्यप्रामाण्यं प्रसक्तम्, गृहीतार्थग्राहित्वाविशेषात्।"–**तत्त्वो० लि० पृ० ३०.**

